महाकविश्रीकालिदासविरचितं

# मालविकाग्निमित्रम्



(MĀLAVIKĀGNIMITRA)

श्रीकाटयवेमभूपविरचितेन कुमारगिरिराजीयव्याख्यानेन
प्रत्यङ्ककथाविषय-टिप्पणी-पाठान्तर-
पात्रपरिचयादिभिश्च समेतम्

श्रीमदिन्दिराकान्ततीर्थपूज्यचरणान्तेवासिभिः
**नारायण राम आचार्य "काव्यतीर्थ"**
इत्येतैष्टिप्पण्यादिभिः समलंकृत्य संशोधितम्

**निर्णयसागरमुद्रणालयम्, मुंबई २**

मूल्यं १। रूप्यकः

महाकविश्रीकालिदासविरचितं

# मालविकाग्निमित्रम्



(MĀLAVIKĀGNIMITRA)

श्रीकाटयवेमभूपविरचितेन कुमारगिरिराजीयेन व्याख्यानेन
टिप्पणी-पाठान्तर-पात्रपरिचयादिभिश्च समेतम्।

श्रीमदिन्दिराकान्ततीर्थपूज्यचरणान्तेवासिभिः
**नारायण राम आचार्य "काव्यतीर्थ"**
इत्येतैष्टिप्पण्यादिभिः समलंकृत्य संशोधितम्



नवमं संस्करणम् १९५०

निर्णयसागरमुद्रणालयम्, मुंबई २

मूल्यं १। रूप्यकः

# मालविकाग्निमित्रस्थ–
# पात्राणां परिचयः

– पुमांसः –

सूत्रधारः—प्रधानो नटः
पारिपार्श्विकः—सहकार्यकरो नटः

राजा अग्निमित्रः } विदिशाया नृपः नाटकेऽस्मिन्नायकः

विदूषकः गौतमः } नृपस्य सहचरो वयस्यो ब्राह्मणः

अमात्यः वाहतकः } अग्निमित्रस्य प्रधानसचिवः

गणदासः आचार्यः } अभिनयकुशलो राजाश्रितो हरदत्तप्रतिस्पर्धी नाट्याचार्यः मालविकाया नाट्योपदेशकश्च

हरदत्तः आचार्यः } अपरो राजाश्रितो नाट्याचार्यः

कञ्चुकी मौद्गल्यः } स्थविरोऽन्तःपुरचरः

सारसिकः—देव्या धारिण्याः अनुचरः
वैतालिकः—राजाश्रितो बन्दी

– स्त्रियः –

मालविका—माधवसेनस्य भगिनी नायिका चात्र

धारिणी देवी } अग्निमित्रस्य पट्टमहिषी

इरावती—अग्निमित्रस्यापरा राज्ञी

परिव्राजिका कौशिकी } सुमतेः स्वसा, तन्निधनात्परं तपस्विनीवेषेण धारिणीसंश्रिता

प्रतीहारी जयसेना } राजभवनस्य द्वारपालिका

बकुलावलिका—धारिणीदेव्याः परिचारिका, मालविकाया नितान्तसखी

कौमुदिका नागरिका } धारिण्याः परिचारिकाद्वयम्

निपुणिका—देव्या इरावत्याः परिचारिका
समाहितिका—कौशिक्याः परिचारिका

उद्यानपालिका मधुकरिका } प्रमदवनस्य परिपालिका

ज्योत्स्निका मदनिका } माधवसेनस्य भूतपूर्वपरिचारिकाद्वयम्; संप्रति यज्ञसेन-समाश्रितम्

# रङ्गेऽनुपस्थितपात्राणां परिचयः

–पुमांसः–

**यज्ञसेनः**—विदर्भनृपः
**माधवसेनः**—विदर्भनृपस्य पितृव्यपुत्रो मालविकायाश्च भ्राता
**सुमतिः**—माधवसेनस्य सचिवः, कौशिक्या भ्राता
**पुष्पमित्रः**—अग्निमित्रस्य पिता
**वसुमित्रः**—अग्निमित्रस्य सुतः
**वीरसेनः**—धारिण्या भ्राता राजश्यालकः
**मौर्यसचिवः**—मौर्याणाममात्यः, यज्ञसेनस्य श्यालकः
**ध्रुवसिद्धिः**—विषविद्यानिपुणो राजवैद्यः

– स्त्रियः –

**वसुलक्ष्मी**—राजकुमारी
**माधविका**—सारभाण्ड(भूगृह) व्यापारिता दासी
**चन्द्रिका**—देव्या इरावत्याः परिचारिका

## –स्थलपरिचयः–

विदिशानगरी तत्संनिकृष्टान्युपवनानि च

कथासरित्सागरस्थं

# मालविकाग्निमित्रसमकथानकम्

तद्गोत्रस्खलितो देवीं पादलग्नः प्रसादयन् ।
लेभे सुभगसाम्राज्यमभिषिक्तस्तदश्रुभिः ॥ ६६ ॥
किं च बन्धुमतीं नाम राजपुत्रीं भुजार्जिताम् ।
गोपालकेन प्रहितां कन्यां देव्या उपायनम् ॥ ६७ ॥
तया मंजुलिकेत्येव नाम्नान्येनैव गोपिताम् ।
अपरामिव लावण्यजलधेरुद्गतां श्रियम् ॥ ६८ ॥
वसन्तकसहायः सन् दृष्ट्वोद्यानलतागृहे ।
गान्धर्वविधिना गुप्तमुपयेमे स भूपतिः ॥ ६९ ॥
तच्च वासवदत्तास्य ददर्श निभृतस्थिता ।
प्रचुकोप च बध्द्वा च सा निनाय वसन्तकम् ॥ ७० ॥
ततः प्रव्राजिकां तस्याः सखीं पितृकुलागताम् ।
स सांकृत्यायनीं नाम शरणं शिश्रिये नृपः ॥ ७१ ॥
सा तां प्रसाद्य महिषीं तया सैव कृताज्ञया ।
ददौ बन्धुमतीं राज्ञे पेशलं हि सतीमनः ॥ ७२ ॥
ततस्तं बन्धनाद्देवी सा मुमोच वसन्तकम् ।
स चागत्याग्रतो राज्ञीं हसन्निति जगाद ताम् ॥ ७३ ॥
बन्धुमत्यापराद्धं च किं मया देवि ते कृतम् ।
डुण्डुभेषु प्रहरथ क्रुद्धा यूयमहीन्प्रति ॥ ७४ ॥
एतत्त्वमुपमानं मे व्याचक्ष्वेति कुतूहलात् ।
देव्या पृष्टस्तया सोऽथ पुनराह वसन्तकः ॥ ७५ ॥

—द्वितीये कथामुखलम्बके षष्ठस्तरङ्गः

# प्रथमाङ्कस्य कथावस्तु

प्रथमाङ्कस्य प्रस्तावनायां तावन्नान्दीपठनानन्तरं कालिदासीयं मालविकाग्निमित्राभिधेयमभिनवं नाटकं वसन्तोत्सवे प्रयोक्तव्यमिति विद्वत्परिषदाभिहितमिति 'पुराणमित्येव न साधु सर्वं, न चापि काव्यं नवमित्यवद्यम्' इत्यस्यानवद्यत्वं च प्रतिपाद्य प्रारभते सूत्रधारः। तत्र तावद्बकुलावलिका—कौमुदिकयोः संवादात्मकमिश्रविष्कम्भकादिद-मधिगम्यते—यत् विदिशाधिपोऽग्निमित्रो हि चित्रशालायां प्रत्य-ग्रवर्णरागामाचार्यस्य चित्रनिर्मितिं समवलोकयन्तीं देवीं धारिणीं दृष्ट्वा सकुतूहलं पर्यपृच्छत्—'चित्रे परिजनमध्यस्था सौन्दर्यसर्वस्व-मूर्तिः केयं बालिकेति'। तदा देव्यतिसाशङ्कितहृदया मालविका-यौवनसौन्दर्यादिमुग्धं साभिलाषं च राजानं तस्या नामधेयादि नाकथयत्। यावद्देवी न कथयति तावत्संनिहितया कुमार्या वसु-लक्ष्म्याख्यातं बालभावेन—'एषा मालविका' इति। देव्या धारिण्या च तस्माद्दिनान्मालविका भर्तुर्दर्शनपथादधिकतरं नागरक्षितनिधि-वत्संरक्षिता च। एतद्विज्ञाय मालविकाकृष्टहृदयो राजा येनकेनाप्यु-पायेन मालविकाया यथा प्रत्यक्षदर्शनं भवेत्तथोपायं चिन्तयेति विदूषकं समादिदेश। तत्प्रेरितो विदूषको हि नाट्याचार्यगणदास-हरदत्तयोः परस्परमधिक्षेपात्मकं कलहं समुत्पादितवान्। ततस्तौ परस्परयशःपुरोभागिनावाचार्यौ स्वस्वोपदेशं ख्यापयन्तौ निर्णयार्थं राजानमुपतस्थतुः। 'प्रत्यक्षप्रयोगनिर्णेयं नाट्यशास्त्रम्' इति सिद्धांतं लक्ष्यीकृत्य, 'श्लिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता। यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव' इति स्वीयशिष्यासंक्रांतैरेवोपदेशैः प्रेक्षागृहे विरलनेपथ्यपात्रप्र-वेशेन दुष्प्रयोज्यश्चतुष्पादोत्थश्छलिकप्रयोगो दर्शयितव्यो येन निर्णयः सुकर इति प्राश्निकपदाध्यासितया कौशिक्या देवीधारिणीसमेतया निर्णीतमिति वस्तु संग्रथितम्।

महाकविकालिदासविरचितं

# मालविकाग्निमित्रम्

## प्रथमोऽङ्कः

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

---

वेदादीनां विशुद्धानां विद्यानां जन्महेतवे ।
पार्वतीपरतन्त्राय परस्मै वस्तुने नमः ॥
भाग्यं नाम समग्रमीदृशमतिस्नेहैकपात्रं यतो
नीरं काटयवेममुद्धतरिपुध्वंसे नियुज्य स्वयम् ।
नित्यं नन्दति नर्तनैरभिनवैः कान्तैर्वसन्तोत्सवैः
संतानाभ्युदयैः कुमारगिरिभूपालो नृपालोत्तमः ॥

अत्र कविः कालिदासः प्रारिप्सितस्य ग्रन्थास्याविघ्नेन परिसमाप्त्यर्थमिष्टदेवतास्मरणपूर्वकमाशिषं प्रयुङ्क्ते—**एकैश्वर्य इत्यादि** । स ईशः परमेश्वरः सन्मार्गालोकनाय, सन् प्रशस्तो मार्गः पन्था मोक्षमार्गस्तस्यालोकनाय दर्शनाय वो युष्माकं तामसीं तमःसंबन्धिनीं वृत्तिं प्रवृत्तिं व्यपनयतु अपाकरोत्विति संबन्धः । कथंभूत ईशः ? । यः प्रणतबहुफले । बहूनि फलानि यस्मात्तत्तथोक्तम् । प्रणतानां प्रणामं कृतवताम्, भक्तानामित्यर्थः । बहुफलं तस्मिन् । एकैश्वर्ये ईश्वरस्य भाव ऐश्वर्यम् । एकं मुख्यम्, अनन्यसाधारणमित्यर्थः । तच्च तदैश्वर्यं च । तस्मिन्स्थितोऽपि; अणिमाद्यैश्वर्ययुक्तोऽपीत्यर्थः । स्वयमात्मना कृत्तिवासाः कृत्तिश्चर्म वासो वसनं यस्य स तथोक्तः । यः कान्तासंमिश्रदेहोऽपि कान्तया स्त्रिया संमिश्रः संमिलितो देहः शरीरं यस्य स तथोक्तस्तादृशोऽपि सन् । अविषयमनसां न विद्यन्ते विषयाः शब्दादयो येषां तान्यविषयाणि तानि मनांसि येषां ते तथोक्ताः तेषाम्, यतीनां संयमिनां परस्तात्परः श्रेष्ठः । 'दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (पा० ५।३।२७) इत्यस्तातिप्रत्ययः । अष्टाभिस्तनुभिः पृथिव्यादिमूर्तिभिः कृत्स्नं सर्वं जगल्लोकं बिभ्रतोऽपि धारयतोऽपि यस्याभिमानोऽहंकारो ममत्वं न भवति । एषु विशेषणेषु विरोधालंकारेणास्येश्वरस्य लोकातिशायित्वमुक्तं भवति। अत्र प्रणतबहुफल एकैश्वर्यस्थित्या कान्तासंमिश्रणेन जगद्धरणेन ईश इत्यनेन च लोकोत्तरः कश्चिद्राजाऽस्मिन्नाटके वर्ण्यत इति सूच्यते। सन्मार्गालोकनायेत्यनेनात्र कश्चिन्मार्गाभिनयः प्रतिपाद्यत इति सूच्यते। मार्गो नाम नाट्यविशेषः। तथोक्तम्—'मार्गोऽपि देशी तद्भेदः कथितो नाट्यवेदिभिः। अत्र मार्गो भवेन्नाट्यं नाट्यवेदोक्त-

---

पाठा०–१ पुरस्तात्. २ नस्तामसीं.

( नान्द्यन्ते )

**सूत्रधारः**—( नेपथ्याभिमुखमवलोक्य ) मारिष ! इतस्तावत् ।

( प्रविश्य[1] )

**पारिपार्श्विकः**[2]—भाव ! अयमस्मि ।

**सूत्रधारः**[3]—अभिहितोऽस्मि विद्वत्परिषदा कालिदासग्रथितवस्तु[4] मालविकाग्निमित्रं नाम नाटकमस्मिन्वसन्तोत्सवे प्रयोक्तव्यमिति । तदारभ्यतां [1]संगीतम् ।

**पारिपार्श्विकः**—मा तावत्; प्रथितयशसां भाससौमिल्लककविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां [2]कथं बहुमानः ? ।

**सूत्रधारः**—अयि ! विवेक[3]विश्रान्तमभिहितम् । पश्य

---

लक्षणम् ॥' इति । एष नान्दीश्लोकः । नान्द्यादिलक्षणं तु शाकुन्तलव्याख्यान एवाभिहितम् । अत्र 'पदादिनियमोऽपि वा' इति विकल्पात्पदादिनियमाभावः ॥ अथ प्रस्तावनां विवक्षुस्तदङ्गयोः प्ररोचनामुखयोः प्ररोचनां प्रस्तौति—**नान्द्यन्ते । सूत्रधार इत्यादिना** । मारिष ! इतस्तावत् । आगम्यतामिति शेषः । नटः सूत्रधारेण मारिष इति वाच्यः । 'सूत्री नटेन भावेति तेनासौ मारिषेति च' इत्युक्तत्वात् ॥ परिपार्श्वं यथा भवति तथा वर्तत इति पारिपार्श्विकः । नट इत्यर्थः । 'परिमुखं च' इत्यत्र चकाराट्ठक् ॥ **अभिहितोऽस्मीत्यादि** । विद्वत्परिषदा विदुषां विपश्चितां परिषत्सभा तया अनेन सभाप्रशंसा कृता । कालिदासग्रथितवस्तु कालिदासेन ग्रथितं वस्तु कथा यस्मिंस्तत्तथोक्तम् । मालविकाग्निमित्रम् । 'अधिकृत्य कृते ग्रन्थे' (पा० ४।३।८७) इत्यण् । यथा मालतीमाधवम् । 'वसन्तोत्सव' इत्यनेन कालनिर्देशः कृतः । संगीतं तौर्यत्रिकम् । तथा चोक्तं **संगीतरत्नाकरे** (१।२१)— 'गीतं वाद्यं तथा नृत्तं संगीतमुच्यते' इति । आरभ्यतां प्रयोक्तुं यत्नः क्रियताम् ॥ मा तावत् । मा इति निवारणे । भास-कविपुत्र-सौमिल्लकाः कवयः प्राक्तनाः । प्रबन्धान् रूपकाणि । अतिक्रम्योल्लङ्घ्य, परिहृत्येत्यर्थः । कालिदासस्य कालिदासनामधेयस्य कवेः । क्रियायां कृतौ रूपके । कथं बहुमान आदरातिशयः ? 'कथम्' इत्यापेक्षे । विवेक

---

**पाठा०—१ संगीतकम्. २ कथं परिषदः. ३ °विश्रान्त°.**

---

टिप्प०-1 क्वचित् 'परिपार्श्वक' इत्यपि पाठः, स चाप्यनवद्यः । 'सूत्रधारस्य पार्श्वे यः प्रकरोत्यमुना सह । काव्यार्थसूचनालापं स भवेत्पारिपार्श्विकः ॥' इति **भरतः** । 2 अत्रापटीक्षेपेण स्वयं प्रविश्य संभाषणं करोतीति भावः । 3 तल्लक्षणं चोक्तम्–'नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम् । रङ्गदैवतपूजाकृत् सूत्रधार इति स्मृतः ॥' इति । 4 'वस्तु तत्स्यात्प्रबन्धस्य शरीरं कविकल्पितम् ।' इत्युक्तं **साहित्यदर्पणे** ।

पुराणमित्येव न साधु सर्वं,
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते,
मूढः परप्रत्ययनेयबुद्धिः ॥ २ ॥

**पारिपार्श्विकः**—आर्यमिश्राः प्रमाणम् ।

**सूत्रधारः**—तेन हि त्वरतां भवान् ।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ ३ ॥

( इति निष्क्रान्तौ )

## इति प्रस्तावना ।

(ततः प्रविशति बकुलावलिका)

**बकुलावलिका**—आणत्तम्हि देवीए धारिणीए—अइरप्पउत्तोवदेसं छलिअं णाम णट्टअं अंदरेण कीरिसी मालविअत्ति णट्टाअरिअं अज्जगणदासं पुच्छिदुं । ता दाव संगीदसालं गच्छम्हि ।

---

ग्रस्तं विवेकदुर्बलम्, विवेकशून्यमित्यर्थः । क्रियाविशेषणं चैतत् ॥ **पुराणमित्यादि ।** सर्वं काव्यं कवेः कर्म, कृतिरित्यर्थः । पुराणमित्येव पुराणत्वादेव साधु रम्यं न भवति । नवमिति च नवत्वादेव अवद्यं गर्ह्यं न भवति । किंतु सन्तो विद्वांसः परीक्ष्य पुराणं नवं च काव्यं गुणतो दोषतश्च परामृश्य अन्यतरत्तयोरेकं पुराणं नवं वा, गुणयुक्तमित्यर्थः । भजन्ते, स्वीकुर्वन्तीत्यर्थः । मूढोऽज्ञस्तु परप्रत्ययनेयबुद्धिः परस्यान्यस्य प्रत्ययेन ज्ञानेन नेया प्राप्या बुद्धिर्यस्य स तथोक्तः । अनेन कविकाव्यप्रशंसा कृता ॥ **शिरसेत्यादि** ॥ शिरसा मूर्ध्ना प्रथमगृहीतां पूर्वस्वीकृताम् । शिरसो ग्रहणेन भक्त्यतिशयो गम्यते । परिषदः सभाया आज्ञां शासनं कर्तुं निर्वर्तयितुमिच्छाम्यभिलषामि । अत्रोपमामाह—धारिण्या देव्याः । धारिणी नाम कथानायकस्य पत्नी, तस्या आज्ञां सेवादक्षः परिचर्यानिपुणोऽयं पुरोवर्ती परिजन इव । परिचारको जनः परिजनः । अनेन पात्राक्षेपहेतुः प्रयोगातिशयो[1] नाम मुखाङ्गमुक्तं भवति ॥ **इति प्रस्तावना**[2] ॥ कविरिदानीमङ्कमारभमाणः कथोपयोगितया प्रथमं मिश्रविष्कम्भं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादिना ।** आज्ञप्तास्मि देव्या धारिण्या । अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्यमन्त-

---

टिप्प०—1 तल्लक्षणं चोक्तं **दशरूपके** (३।११)—'एषोऽयमित्युपक्षेपात् सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः ॥' इति । 2 लक्षणं चास्योक्तम् (सा. द. ६।३१)—'नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥' इति ।

[आज्ञप्तास्मि देव्या धारिण्या—अचिरप्रवृत्तोपदेशं चलितं नाम नाट्यमन्तरेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम् । तस्मात्तावत्संगीतशालां गच्छामि ।] (इति परिक्रामति)

(ततः प्रविशत्याभरणहस्ता कौमुदिका)

**बकुलावलिका**—(कौमुदिकां दृष्ट्वा) हला कोमुदीए! कुदो दे दाणिं इअं धीरदा, जं समीवेण[1] वि अदिक्कमंती इदो दिट्ठिं ण देसि? । [सखि कौमुदिके! कुतस्त इदानीमियं धीरता, यत्समीपेनाप्यतिक्रामन्तीतो दृष्टिं न ददासि? ।]

**कौमुदिका**—अम्हो बउलावलिआ । सहि! देवीए इदं सिप्पिस-आसादो आणीदं णाअमुद्दासणाहं[2] अंगुलीअअं सिणिद्धं णिज्झाअंती तुह उवालंभे पडिदम्हि । [अहो बकुलावलिका । सखि! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती तवोपालम्भे पतितास्मि ।]

**बकुलावलिका**—(विलोक्य) ठाणे सज्जदि दिट्ठी । इमिणा अंगुली-अएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो पडिभादि । [स्थाने सज्जति दृष्टिः । अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः प्रतिभाति ।]

**कौमुदिका**—हला! कहिं पत्थिदा सि? । [सखि! कुत्र प्रस्थितासि ।]

**बकुलावलिका**—देवीए एव्व वअणेण णट्टाअरिअं अज्जगणदासं पुच्छिदुं 'उवदेसग्गहणे कीरिसी मालविअ?' त्ति । [देव्या एव वचनेन नाट्याचार्यमार्यगणदासं प्रष्टुम्—उपदेशग्रहणे कीदृशी मालविका? इति ।]

**कौमुदिका**—सहि! ईरिसेण वावारेण असंणिहिदा वि सा कहं भट्टिणा दिट्ठा? [सखि! ईदृशेन व्यापारेणासंनिहितापि सा कथं भर्त्रा दृष्टा?]

---

रेण कीदृशी मालविकेति नाट्याचार्यमार्यगणदासं प्रष्टुम् । तस्मात्तावत्संगीतशालां गच्छामि । 'अन्तरेण' इत्ययं निपात उद्देशार्थे वर्तते । छलिकं नाम नाट्यविशेष इत्यर्थः । तथा चोक्तम्—'तदेव छलिकं नाम साक्षाद्यदभिनीयते । व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम् ॥' इति ॥ सखि कौमुदिके! कुतस्त इदानीमियं धीरता, यत्समीपेनाप्यतिक्रामन्तीतो दृष्टिं न ददासि? ॥ अहो बकुलावलिका । सखि! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निध्यायन्ती पश्यन्ती तवोपालम्भे पतितास्मि ॥ स्थाने सज्जति दृष्टिः । अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः प्रतिभाति ॥ सखि! कुत्र प्रस्थितासि? ॥ देव्या एव वचनेन नाटकाचार्यमार्यगणदासं प्रष्टुम्—'उपदेशग्रहणे कीदृशी मालविका?' इति ॥ सखि! ईदृशेन व्यापारेणासंनिहितापि सा कथं भर्त्रा

---

पाठा०—१ समीपे वि. २ सप्पमुद्दा°.

**वकुलावलिका**—आं, सो जणो देवीए पास्सगदो चित्ते दिट्ठो। [ आम्, स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः । ]

**कौमुदिका**—कहं विअ ? । [ कथमिव ? । ]

**वकुलावलिका**—सुणाहि, चित्तसालं गदा देवी जदा पच्चग्गवण्णराअं चित्तलेहं आआरिअस्स आलोअंती चिट्ठदि । तस्सिं अंतरे भट्टा अ उवट्ठिदो । [ शृणु, चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यालोकयन्ती तिष्ठति । तस्मिन्नन्तरे भर्ता चोपस्थितः । ]

**कौमुदिका**—तदो तदो ?। [ ततस्ततः ?। ]

**वकुलावलिका**—तदो अ उवआराणंतरं एक्कासणोवविट्ठेण भट्टिणा चित्तगदाए देवीए परिअणमज्झगदं आसण्णदारिअं देक्खिअ देवी पुच्छिदा । [ ततश्चोपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नदारिकां दृष्ट्वा देवी पृष्टा ।]

**कौमुदिका**—किं विअ ? । [किमिव ?।]

**वकुलावलिका**—अपुब्वा इअं दारिआ आसण्णा अ देवीए आलिहिदा किंणामहेअत्ति । [ अपूर्वेयं दारिका आसन्ना च देव्या आलिखिता किंनामधेयेति । ]

**कौमुदिका**—आकिदिविसेसेसु आअरो पदं करेदि । तदो तदो ?। [ आकृतिविशेषेष्वादरः पदं करोति । ततस्ततः ?। ]

**वकुलावलिका**—तदो अवहीरिअवअणो भट्टा संकिदो देविं पुणो पुणो वि अणुबंधिदुं पवुत्तो । तदो जाव देवी ण कहेदि दाव कुमारीए वसुलच्छीए आअक्खिदं—आवुत्त ! एसा मालविअत्ति । [ ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनःपुनरप्यनुबन्धुं प्रवृत्तः । ततो यावद्देवी न कथयति तावत्कुमार्या वसुलक्ष्म्याख्यातम्–आवुत्त ! एषा मालविकेति । ]

**कौमुदिका**—( सस्मितम् ) सरिसं खु बालभाअस्स । अदो वरं कहेहि । [सदृशं खलु बालभावस्य । अतः परं कथय । ]

---

दृष्टा ? ॥ आमित्यभ्युपगमे । स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः ॥ कथमिव ? ॥ शृणु । चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यालोकयन्ती तिष्ठति । भर्ता चोपस्थितः । ततस्ततः ? । उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नदारिकां दृष्ट्वा देवी पृष्टा ॥ **किमिति** ॥ अपूर्वेयं दारिका आसन्ना च देव्या आलिखिता किंनामधेयेति ॥ आकृतिविशेषेष्वादरः पदं करोति । ततस्ततः ? ॥ ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनःपुनरप्यनुबन्धुम् । ततो यावद्देवी न कथयति तावत्कुमार्या वसुलक्ष्म्याख्यातम्–आर्य ! एषा मालविकेति ।

**बकुलावलिका**—किं अण्णं ? । संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि । [ किमन्यत् ? । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते । ]

**कौमुदिका**—हला ! अणुचिट्ठ अत्तणो णिओअं । अहं वि एदं अंगुलीअअं देवीए उवणइस्सं । [ सखि ! अनुतिष्ठात्मनो नियोगम् । अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि । ] ( इति निष्क्रान्ता )

**बकुलावलिका**—(परिक्रम्यावलोक्य) एसो णट्टाअरिओ अज्जगणदासो संगीदसालादो णिग्गच्छदि । जाव से अत्ताणं दंसेमि । [ एष नाट्याचार्य आर्यगणदासः संगीतशालातो निर्गच्छति । यावदस्मा आत्मानं दर्शयामि । ]

( इति परिक्रामति )

( प्रविश्य )

**गणदासः**—कामं खलु सर्वस्यापि कुलविद्या वहुमता । न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम् । तथा हि

**देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं**
**रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।**
**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते**
**नाट्यं भिन्नरुचेर्जनस्य वहुधाप्येकं समाराधनम् ॥ ४ ॥**

---

सदृशं खलु बालभावस्य । अतः परं कथय ॥ किमन्यत् ? । सांप्रतं मालविका सविशेषं भर्तुर्दर्शनपथाद्रक्ष्यते । 'अपुव्वा इअं दारिआ' इत्यारभ्य 'दंसणपहादो रक्खीअदि' इत्यन्तेन वाक्यकदम्बकेन गम्यमानो मालविकागोचरो राज्ञोऽभिलाषोऽत्र नाटके बीजमित्यनुसन्धेयम् ॥ सखि ! अनुतिष्ठात्मनो नियोगम् । अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि ॥ एष नाट्याचार्यः संगीतशालातो निर्गच्छति । यावदस्मा आत्मानं दर्शयामि ॥ **देवानामित्यादि** । मुनयो भरतमतङ्गादय इदं नाट्यं देवानामिन्द्रादीनां क्रतुं यज्ञमामनन्ति । कीदृशम् ? । शान्तं सौम्यम्, पशुविशसनादिरहितमित्यर्थः । पुनः कीदृशम् ? । चाक्षुषं चक्षुरनुभाव्यम् । अस्य नाट्यस्य क्रतुत्वनिरूपणं चतुर्वेदसारनाट्यवेदविहितकर्मत्वादिति मन्तव्यम् । तथा च **कुमारसंभवे** ( २।२२ )—'कर्म यज्ञः फलं स्वर्गः' इति । अस्य चतुर्वेदसारत्वं **भारतीये** (१।१५) प्रतिपादितम्—'सर्वशास्त्रार्थसंपन्नं सर्वशिल्पप्रदर्शकम् । नाट्यसंज्ञमिमं वेदं सेतिहासं करोम्यहम् ॥ एवं संकल्प्य भगवान्सर्वान्वेदाननुस्मरन् । नाट्यवेदं ततश्चक्रे चतुर्वेदाङ्गसंभवम् ॥ जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च । यजुर्वेदादभिनयान्रसानाथर्वणादपि ॥ वेदोपवेदसंबद्धो नाट्यवेदो महात्मना । एवं भगवता सृष्टो ब्रह्मणा ललितात्मना ॥ उत्पाद्य नाट्यवेदं तु ब्रह्मोवाच सुरेश्वरम् ॥' इति । प्रकारान्तरेणाप्यस्य क्रतुत्वं प्रतिपादितम्—'प्रयोगं यश्च कुर्वीत प्रेक्षते चावधानवान् । या गतिर्वेदविदुषां या गतिर्यज्ञयाजिनाम् । या गतिर्दान-

**बकुलावलिका**—(उपेत्य) अज्ज ! वंदामि । [आर्य ! वन्दे ।]

**गणदासः**—भद्रे ! चिरं जीव ।

**बकुलावलिका**—अज्ज ! देवी पुच्छदि,—अवि उवदेसग्गहणे णादिकिलिस्सदि वो सिस्सा मालविअत्ति । [आर्य ! देवी पृच्छति,-अप्युपदेशग्रहणे नातिक्लेशयति वः शिष्या मालविकेति ।]

**गणदासः**—भद्रे ! विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति । किं बहुना,

> यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
> तत्तद्विशेषकरणात्प्रत्युपदिशतीव मे बाला ॥ ५ ॥

**बकुलावलिका**—(आत्मगतम्) अदिक्कमंतिं विअ इरावदिं पेक्खामि । (प्रकाशम्) किदत्था दाणिं वो सिस्सा, जस्सिं गुरुअणो एव्वं तुस्सदि । [अतिक्रामन्तीमिवेरावतीं पश्यामि । कृतार्थेदानीं वः शिष्या, यस्यां गुरुजन एवं तुष्यति ।]

---

शीलानां तां गतिं प्राप्नुयान्नरः ॥' इति । पुनः कीदृशमिदं नाट्यम्? । रुद्रेणेश्वरेणोमाकृतव्यतिकरे उमया पार्वत्या कृतो व्यतिकरः संबन्धो यस्य स तथोक्तस्तस्मिन्स्वाङ्गे आत्मदेहे द्विधा द्विप्रकारेण लास्य-ताण्डवरूपेण विभक्तं पृथक्कृतम् । तथा चोक्तं **संगीतविद्याविनोदे**–'उद्दण्डताण्डवमुदञ्चितलास्यलीलां कर्तुं स्वयं युगपदेव समुत्सुकात्मा । यः कामिनीकलितकम्रतरार्धकायः सोऽयं विभाति विभुरादिनटः सुराणाम् ॥' अत्र नाट्ये । त्रैगुण्योद्भवं त्रयो गुणाः सत्त्वरजस्तमांस्येव त्रैगुण्यम् । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । तस्मादुद्भवमुद्भूतं लोकचरितं लोकानां लोकस्थानां रामाद्यनुकार्याणां चरितं सुखदुःखमिश्रात्मकं चरितं नानारसं नाना बहुविधा रसाः प्रियतमोपभोग्या यस्मिंस्तत्तथोक्तं दृश्यते ज्ञायते, सामाजिकैरनुभूयत इत्यर्थः । लोकेऽनुकार्यस्य चरितं सुखदुःखमिश्रात्मकमपि नाट्यं नटेनाभिनीयमानं सत्सुखरूपेणैव प्रतीयत इति भावः । पुनः कीदृशम्? । नाट्यं नटनप्रयोगः । एकमप्येकैकमपि भिन्नरुचेर्भिन्ना बहुविधा रुचयः प्रीतयो यस्य स तथोक्तस्तस्य जनस्य बहुधा बहुप्रकारेण शृङ्गारहास्यादिरूपेण समाराधनं संतर्पकम् । तथा चोक्तं **भारतीये**–'त्रैलोक्यस्यास्य सर्वस्य नाट्यं भावानुकीर्तनम् । धर्मो धर्मप्रवृत्तानां कामः कामोपसेविनाम् । अर्थोपजीविनामर्थो धृतिरुद्विग्नचेतसाम् ॥ नानाभावोपसंपन्नं नानावस्थान्तरात्मकम् । लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥ एतद्रसेषु भावेषु सर्वकर्मक्रियासु च । सर्वोपदेशजननं नाट्यमेतद्भविष्यति ॥ न तज्ज्ञानं न तच्छिल्पं नासौ विद्या न सा कला । नासौ योगो न तत्कर्म नाट्येऽस्मिन्यन्न दृश्यते ॥' इति ॥ आर्य ! वन्दे ॥ आर्य ! देवी पृच्छति—अप्युपदेशग्रहणे नातिक्लेशयति वः शिष्या मालविकेति ॥ **यद्यदित्यादि** । प्रयोगविषयेऽभिनयार्थे मया तस्यै मालविकायै यद्यद्भाविकं भाववत् । 'अत इनिठनौ' (पा० ५।२।११५)

**गणदासः**—भद्रे ! तद्विधानामसुलभत्वात्पृच्छामि । कुतो देव्या तत्पात्रमानीतम् ? ।

**बकुलावलिका**—अत्थि देवीए वण्णावरो भादा वीरसेणो णाम । सो भट्टिणा णम्मदातीरे अंतवालदुग्गे ठाविदो । तेण सिप्पाहिआरे जोग्गा इअं दारिअत्ति भणिअ भइणीए देवीए उवाअणं पेसिदा । [अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । स भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः । तेन शिल्पाधिकारे योग्येयं दारिकेति भणित्वा भगिन्यै देव्यै उपायनं प्रेषिता । ]

**गणदासः**—(स्वगतम्) आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि । (प्रकाशम्) भद्रे ! मयापि यशस्विना भवितव्यम् । यतः

**पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।**
**जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ६ ॥**

**बकुलावलिका**—अज्ज ! कहिं दाणिं वो सिस्सा ? । [आर्य ! कुत्रेदानीं वः शिष्या ? । ]

**गणदासः**—इदानीमेव पञ्चाङ्गाभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति ।

---

इति ठन् । नृत्यमित्यर्थः । यथोक्तम्–'आङ्गिकाभिनयप्रायमल्पवाचिकसात्विकम् । भावानामास्पदं नृत्यं पदार्थव्यञ्जनात्मकम् ॥' इति । उपदिश्यते बोध्यते । तत्तद्विशेषकरणात्तस्य तस्य भाविकस्य विशेषेणातिशयेन करणं निर्वर्तनं तस्मात्सा बाला मे प्रत्युपदिशतीव प्रतिबोधयतीव । अनेन तस्या नृत्ये प्रावीण्यातिशयो गम्यते ॥ अतिक्रामन्तीमिवेरावतीं पश्यामि । कृतार्थेदानीं वः शिष्या, यस्यां गुरुजन एवं तुष्यति ॥ अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । भर्त्रा नर्मदातीरेऽन्तपालदुर्गे स्थापितः । तेन शिल्पाधिकारे कलाविद्याधिगम इयं योग्या दारिकेति भणित्वा भगिन्यै देव्यै उपायनं प्रेषिता ॥ अनूनवस्तुकामनूनमनल्पं विशिष्टं वस्तु वृत्तं यस्याः सा तथोक्ता तां संभावयामि मन्ये । **पात्रविशेष इत्यादि** । आधातुरुपदेष्टुः शिल्पं कलाविद्या पात्रविशेषे विशिष्टपात्रे न्यस्तं निहितं सत् गुणान्तरं गुणविशेषं व्रजति प्राप्नोति । अत्रोपमामाह–पयोदस्य मेघस्य जलं समुद्रशुक्तौ न्यस्तं सत् मुक्ताफलतां मौक्तिकत्वमिव ॥ आर्य ! कुत्रेदानीं वः शिष्या ? ॥ **इदानीमित्यादि** । पञ्चाङ्गाभिनयं पञ्च अङ्गानि यस्य तत्तथोक्तम्, प्रेरणमित्यर्थः । तस्याभिनयः प्रयोगस्तमिदानीमद्यैवोपदिश्य शिक्षयित्वा ॥ प्रवातं प्रशस्तो वातो यस्मिन्देशे स तथोक्तस्तम् । प्रेरणस्याङ्गपञ्चकमुक्तं **संगीतरत्नाकरे** (१।४३)–'नृत्तं तथा च कैवारो मर्मरो जागरं तथा । गीतं चेति समाख्यातं प्रेरणस्याङ्गपञ्चकम् ॥ त्रिभिस्त्वेतत्प्रयोज्यं

---

टिप्प०–1 असवर्णीयमातृसंभूत इति भावः ।

**बकुलावलिका**—तेण हि पुणो अणुजाणादु मं अज्जो। जाव से अज्जस्स परितोसणिवेदणेण उस्साहं वड्ढेमि। [तेन हि पुनरनुजानातु मामार्यः। यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि।]

**गणदासः**—दृश्यतां सखी। अहमपि लब्धक्षणः स्वगृहं गच्छामि।

(इति निष्क्रान्तौ)

**इति मिश्रविष्कम्भकः।**

(ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा)

**राजा**—(अनुवाचितलेखममात्यं विलोक्य) वाहतक! किं प्रतिपद्यते वैदर्भः?।

**अमात्यः**—देव! आत्मविनाशम्।

**राजा**—संदेशमिदानीं श्रोतुमिच्छामि।

**अमात्यः**—इदमिदानीमनेन प्रतिलिखितम्। पूज्येनाहमादिष्टः 'भवतः पितृव्यपुत्रः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः। स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्य' इति। एतन्ननु[1] वो विदितम्—यत्तुल्या-

---

स्यात्कैवारं जागरं विना॥' इति। अत्र पश्चाङ्गरूपनृत्तान्तरोपक्रमकथनेन चलितं नृत्तं साकल्येन परिशीलितमिति सूच्यते। तेन हि पुनरनुजानातु मामार्यः। यावदस्या आर्यस्य परितोषनिवेदनेनोत्साहं वर्धयामि॥ लब्धक्षणो लब्धः प्राप्तः क्षणो निर्व्यापारस्थितिर्विश्रामो येन स तथोक्तः स्वगृहमात्मगृहं गच्छामि॥ **मिश्रविष्कम्भः॥ ततः प्रविशतीत्यादि**। वाहतकेति तस्यामात्यस्य संज्ञा। वैदर्भो विदर्भराजः किं प्रतिपद्यते किं कार्यं मन्यते?। संदेशं संदिष्टार्थं श्रोतुमिच्छामि॥ अनेन वैदर्भेणेदं प्रतिलिखितं प्रत्युत्तरत्वेनाभिलिखितम्। पूज्येन पूजार्हेण त्वया। अग्निमित्रेणेत्यर्थः। अहं वैदर्भ आदिष्ट आज्ञप्तः। तमेवादेशं विवृणोति—**भवत इत्यादिना**। भवतस्तव पितृव्यपुत्रः पितृभ्रातृसुतो माधवसेनो नाम प्रतिश्रुतसंबन्धः प्रतिश्रुतोऽङ्गीकृतः संबन्धः कन्यकाप्रदानरूपो येन स तथोक्तो ममोपान्तिकं मत्समीपमुपसर्पन्नुपगच्छन्नागच्छन्नन्तरा मध्ये त्वदीयेन त्वत्संबन्धिनान्तपालेन सीमादुर्गरक्षकेणावस्कन्द्य पथि प्रहृत्य गृहीतो निरुद्धः, बन्दीकृत इत्यर्थः। स माधवसेनस्त्वया भवता मदपेक्षया मय्यपेक्षा इच्छा, स्नेह इत्यर्थः। तया हेतुना। सकलत्रसोदर्यो भार्याभगिनीसहितः। 'वोपसर्जनस्य' (पा० ६।३।८२) इति सहशब्दस्य सादेशः। मोक्तव्यो विसर्जनीयः। इति समाप्तौ। एतावता वैदर्भेणाग्निमित्रप्रेषितपत्रिकार्थानुवादः कृत इत्यनुसंधेयम्। इतःपरं प्रत्युत्तररूपं वैदर्भवचनमुच्यते—**एतन्ननु वो विदितमित्यादि**। एतद्वक्ष्यमाणं वो युष्माकं विदितं नन्वित्यत्र काकुरनुसंधेया।

---

**पाठा०—१ तन्न वो न विदितं.**

भिजनेषु राज्ञां वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदर्या पुनरस्य ग्रहणविप्लवे विनष्टा; तदन्वेषणाय प्रयतिष्ये । अथवा, अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः; श्रूयतामभिसंधिः,–

**मौर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम् ।**
**मोक्ता माधवसेनस्ततो मया बन्धनात्सद्यः ॥ ७ ॥**

इति ।

राजा—( सरोषम् ) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः ? । वाहतक ! प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः । तद्यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनप्रमुखं दण्डचक्रमाज्ञापय ।

अमात्यः—यदाज्ञापयति देवः ।

राजा—अथवा किं भवान्मन्यते ? ।

अमात्यः—शास्त्रदृष्टमाह देवः

**अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।**
**नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ८ ॥**

राजा—तेन ह्यवितथं तन्त्रकारवचनम् । इदमेव वचनं निमित्तमुपादाय समुद्योज्यतां सेनाधिपतिः ।

---

तुल्याभिजनेषु समानवंशेषु, ज्ञातिष्वित्यर्थः । राज्ञां वृत्तिर्वर्तनमीदृश्येवंविधेति यत्तन्नु वो विदितमिति संबन्धः । अतोऽस्मात्कारणादत्रास्मिन्नर्थे पूज्यो भवान्मध्यस्थः समो भवितुमर्हति । अस्य माधवसेनस्य सोदर्या स्वसा पुनर्ग्रहणविप्लवे विनष्टा तिरोहिता । तदन्वेषणाय तस्या अन्वेषणाय गवेषणाय प्रयतिष्ये । अथवेति पक्षान्तरे । मोचयितव्यस्त्याजयितव्यः । अभिसंधिर्निश्चयः । **मौर्यसचिवमित्यादि** । पूज्यो भवान्संयतं त्वया निगडितं मम श्यालं पत्नीभ्रातरं मौर्यसचिवं मौर्यसचिवनामानं विमुञ्चति यदि त्यजति चेत् ततस्तस्मात्कारणान्मया सद्यः सपदि माधवसेनो बन्धनान्निगडान्मोक्ता मुक्तो भविता । मुञ्चतेः कर्मणि लुट् । इति लिखितार्थसमाप्तौ ॥ प्रकृत्यमित्रः स्वभावतः शत्रुः । अत्र प्रकृत्यमित्रत्वं च विषयान्तरत्वादिति मन्तव्यम् ॥ **अचिराधिष्ठितेत्यादि** । स्पष्टोऽर्थः ॥ तेनारूढमूलत्वेन हेतुना तन्त्रकारवचनमर्थशास्त्रकारवचनमवितथं हि सत्यमेव । भविष्यतीति शेषः । 'हि'शब्दोऽवधारणे । 'हि हेताववधारणे' इत्यमरः । इदमेव वैदर्भस्य कार्यविनिमयरूपमेव वचनं वाक्यं निमित्तं हेतुमुपादायावलम्ब्य समुद्योज्यतां प्रत्या-

**पाठा०–१ मोक्ता माधवसेनं ततोऽहमपि बन्धनात्.**

---

टिप्प०–1 लुण्ठने लोकसंमर्दे वा । 2 त्वयेत्थमाचरिते सत्यहमित्थं करिष्यामीति व्यवहारेण ।

**अमात्यः**—तथा । ( इति निष्क्रान्तः )

( परिजनश्च यथाव्यापारं राजानमभितः स्थितः )

( प्रविश्य )

**विदूषकः**—आणत्तोम्हि तत्तहोदा रण्णा–गोदम ! चिंतेहि दाव उवाअं, जहा मे जदिच्छादिट्ठप्पदिकिदी मालविआ पच्चक्खदंसणा होदित्ति । मए अ तं तहा किदं दाव से णिवेदेमि । [ आज्ञप्तोऽस्मि तत्रभवता राज्ञा–गौतम ! चिन्तय तावदुपायम्, यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथा कृतं तावदस्मै निवेदयामि । ] ( इति परिक्रामति )

**राजा**—( विदूषकं दृष्ट्वा ) अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ।

**विदूषकः**—( उपगम्य ) वड्ढदु भवं । [ वर्धतां भवान् । ]

**राजा**—( सशिरःकम्पम् ) इत आस्यताम् ।

( विदूषक उपविष्टः )

**राजा**—अपि [1]किञ्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ? ।

**विदूषकः**—पओअसिद्धिं पुच्छ । [ प्रयोगसिद्धिं पृच्छ । ]

**राजा**—कथमिव ? ।

**विदूषकः**—( कर्णे ) एव्वमिव । [ एवमिव । ]

**राजा**—साधु, वयस्य ! निपुणमुपक्रान्तम् । इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयमाशंसामहे । कुतः

---

वर्त्यताम् । आज्ञप्तोऽस्मि तत्रभवता राज्ञा । गौतम ! चिन्तय तावदुपायम् । यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथा कृतम् । तावदस्मै निवेदयामि । अत्र गम्यमानं राज्ञो मालविकादर्शनौत्सुक्यमारम्भो नाम प्रथमावस्थेति मन्तव्यम् । अत्र बीजारम्भयोः समन्वयान्मुखसंधिरित्यनुसंधेयम् ॥ वर्धतां भवान् ॥ उपेयोपायदर्शने उपेयस्य साध्यस्य मालविकासाक्षाद्दर्शनस्योपायदर्शने साधनज्ञाने ते प्रज्ञाचक्षुः प्रतिभादृष्टिः किञ्चिदीषदपि व्यापृतं प्रसृतम् ? । अपिः प्रश्ने । अत्र गम्यमानस्य मालविकारूपस्य बीजस्य विन्यासादुपक्षेपो नाम संध्यङ्गमुक्तं भवति ॥ प्रयोगसिद्धिं पृच्छ ॥ कर्णे—एवमिव । एतद्वचनं नियतस्य व्यापारान्तरभेद्यस्य गुह्यतरार्थस्य प्रयोगे कविना प्रयुक्तम् । तथोक्तम्—'कर्णे एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्प्रसङ्गतः' इति । **इदानीमित्यादि** । अस्मिन्नारम्भे मालविकासाक्षाद्दर्शनोद्योगे दुरधिगमसिद्धौ दुर्लभसिद्धावपीदानीं त्वद्वचनश्रवणानन्तरं

---

**पाठा०**—१ कच्चिदुपेयो०.

**अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।**
**दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ ९ ॥**

(नेपथ्ये)

अलं बहु विकत्थ्य। राज्ञः समक्षमेवावयोरधरोत्तरव्यक्तिर्भविष्यति।[1]

**राजा**—(आकर्ण्य) सखे! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नम्।

**विदूषकः**—फलं वि अइरेण देक्खिस्ससि। [फलमप्यचिरेण द्रक्ष्यसि।]

(ततः प्रविशति कञ्चुकी)

**कञ्चुकी**—देव! अमात्यो विज्ञापयति। अनुष्ठिता प्रभोराज्ञेति। एतौ पुनर्हरदत्त-गणदासौ

**उभावभिनयाचार्यौ परस्परजयैषिणौ।**
**त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ॥ १० ॥**

**राजा**—प्रवेशय तौ।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रम्य, ताभ्यां सह प्रविश्य) इत इतो भवन्तौ।

**गणदासः**—(राजानं विलोक्य) अहो, दुरासदो राजमहिमा।

**न च न परिचितो न चाप्यरम्य-**[1]
**श्चकितमुपैमि तथापि पार्श्वमस्य।**
**सलिलनिधिरिव प्रतिक्षणं मे**
**भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥**

**हरदत्तः**—महत्खलु पुरुषाकारमिदं ज्योतिः। तथा हि

---

वयमाशंसामहे सिद्धिमपेक्षामहे ॥ **अर्थमित्यादि** । सप्रतिबन्धं सप्रतिरोधमर्थं प्रयोजनमधिगन्तुं लब्धुं सहायवानेव जनः प्रभुः समर्थो भवति । 'इदानीम्' इत्यादिना 'सहायवानेव' इत्यन्तेन तस्य बीजस्य बहुलीकरणात्परिकर इति संध्यङ्गमुक्तं भवति ॥ **नेपथ्य इत्यादि** । बहु विकत्थ्यात्मश्लाघां कृत्वालम् । 'अलम्' इति प्रतिषेधे । 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (पा० ३।४।१८) इति क्त्वाप्रत्ययः ॥ फलमप्यचिरेण द्रक्ष्यसि । अत्र बीजस्य दृढीकरणात्परिन्यासो नाम संध्यङ्गमुक्तं भवति ॥ **उभावित्यादि** । शरीरिणौ मूर्तौ साक्षाद्भावौ प्रत्यक्षभावाविव नृत्याभिनयार्थाविव ॥ **न च न परिचित इत्यादि** । अयं राजा परिचितः संस्तुतश्च न भवतीति न, किं तु परिचित एव । अरम्योऽसौम्यश्च न, किं तु रम्य एव । तथापि चकितं सभयं यथा भवति तथास्य पार्श्वं समीपमुपैमि

---

**पाठा०—१ चाप्यगम्यः.**

---

टिप्प०—1 अभिनयकलायामुभयोः परावरत्वनिर्णयः ।

द्वारे नियुक्तपुरुषाभिमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्तितदृष्टिपातै-
र्वाक्याद्दते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

**कञ्चुकी**—एष देवः । उपसर्पतां भवन्तौ ।

**उभौ**—(उपेत्य) विजयतां देवः ।

**राजा**—स्वागतं भवद्भ्याम् । (परिजनं विलोक्य) आसने तावदत्रभवतोः ।

(उभौ परिजनोपनीतयोरासनयोरुपविष्टौ ।)

**राजा**—किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम् ? ।

**गणदासः**—देव ! श्रूयताम् । मया सुतीर्थादभिनयविद्या शिक्षिता, दत्तप्रयोगश्चास्मि । देवेन देव्या च परिगृहीतः ।

**राजा**—दृढं जाने । ततः किम् ? ।

**गणदासः**—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षं 'नायं मे पादरजसापि तुल्य' इत्यधिक्षिप्तः ।

**हरदत्तः**—देव ! अयमेव मयि प्रथमं परिवादकरः[1] । अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति[2] । तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ।

**विदूषकः**—समत्थं पइण्णादं । [समर्थं प्रतिज्ञातम् ।]

**गणदासः**—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

**राजा**—तिष्ठतु तावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।

---

शेषं स्पष्टम् ॥ **द्वारे नियुक्तेत्यादि** । विनिवर्तितदृष्टिपातैर्विनिवारितदृष्टिप्रसरैरस्य राज्ञस्तेजोभिः पुनः प्रभाविशेषैस्तु वाक्याद्दते प्रतिषेधवाक्यं विना प्रतिवारित इव निरुद्ध इवास्मि ॥ **तीर्थादभिनयविद्येत्यादि** । तीर्थाद्विशिष्टाद्गुरोरभिनयविद्या नाट्यविद्या शिक्षिताभ्यस्ता । दत्तप्रयोगश्चास्मि । दत्तः शिष्येभ्यः प्रतिपादितः प्रयोगो विनियोगो येन स तथोक्तः ॥ समर्थं प्रतिज्ञातम् ॥ प्रथमः

---

**पाठा०**-१ °नुमतप्रवेशः.

---

**टिप्प०**—1 निन्दक इत्याशयः । 2 पल्वलमल्पसरः, समुद्रपल्वलयोर्महदन्तरमित्याशयः ।

**विदूषकः**—सुट्ठु भवं भणादि । [ सुष्ठु भवान्भणति । ]

**आचार्यौ**—यद्देवाय रोचते ।

**राजा**—मौद्गल्य ! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः ) इत इतो [1]भवती ।

**धारिणी**—( परिव्राजिकां विलोक्य ) भअवदि ! हरदत्तस्स गणदासस्स अ [2]संरंभे कहं पेक्खसि ? । [ भगवति ! हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि ? । ]

**परिव्राजिका**—अलं स्वपक्षावसादशङ्कया । न परिहीयते प्रतिवादिनो गणदासः ।

**धारिणी**—जइ वि एवं तह वि राअपरिग्गहो से पहाणत्तणं उवहरदि । [ यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रधानत्वमुपहरति । ]

**परिव्राजिका**—अयि ! राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती । पश्य

> **अतिमात्रभासुरत्वं पुष्यति [1]भानोः परिग्रहादनलः ।**
> **अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ १३ ॥**

**विदूषकः**—[3]अइ भो ! उवट्ठिदा पीठमद्दिअं पंडिअकोसिइं पुरोकरिअ तत्तभोदी धारिणी [ अयि ! उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी । ]

---

कल्पो मुख्यः पक्षः ॥ न्याय्यो युक्तः । व्यवहारो विवादः ॥ सुष्ठु भवान्भणति ॥ भगवति ! हरदत्तस्य गणदासस्य च संरम्भे कथं पश्यसि कथं मन्यसे ? अनयोः कतरस्य पराजयं विचारयसीत्यर्थः ॥ **अलं स्वपक्षेत्यादि** । अत्र परिव्राजिकायाः स्त्रीत्वात्प्राकृते प्राप्ते संस्कृताश्रयणं लिङ्गित्वादिति मन्तव्यम् । तथा चोक्तम्—'देवद्विजनरेन्द्राणां लिङ्गिनां संस्कृतं वचः' इति ॥ यद्यप्येवं तथापि राजपरिग्रहोऽस्य हरदत्तस्य प्रधानत्वमुपहरति ॥ **अतिमात्रभासुरत्वमित्यादि** । स्पष्टोऽर्थः ॥ अयि ! उपस्थिता पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी । पीठमर्दो नाम कामपुरुषार्थसहायो नायकसमीपवर्ती पुरुषः कथ्यते । तथा चोक्तम्— 'पीठमर्दः समीपस्थः कार्यालोचनकोविदः' इति । अत्र विदूषकः

---

**पाठा०**—१ देवी धारिणी; देवी. २ संरंभ. ३ अविहा, अविहा, उवट्ठिदा.

1 तथा चोक्तम्—'प्रभा हि सौरी पादेन ह्यस्तं याति दिवाकरे । अग्निमाविशते रात्रौ तस्माद्दूरात् प्रकाशते ॥' इति ।

**राजा**—पश्याम्येनाम् । येषा

मङ्गलालंकृता भाति कौशिक्या यतिवेषया ।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥ १४ ॥

**परिव्राजिका**—( उपेत्य ) विजयतां देवः ।

**राजा**—भगवति ! अभिवादये ।

**परिव्राजिका**—

महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥ १५ ॥

**धारिणी**—जेदु जेदु अज्जउत्तो । [ जयतु जयत्वार्यपुत्रः । ]

**राजा**—स्वागतं देव्यै । ( परिव्राजिकां विलोक्य ) भगवति ! क्रियतामासनपरिग्रहः ।

( सर्वे यथोचितमुपविशन्ति )

**राजा**—भगवति ! अत्रभवतोर्हरदत्त-गणदासयोः परस्परं विज्ञानसंघर्षो[1] जातः । तदत्र भगवत्या प्राश्निकपदमध्यासितव्यम् ।

**परिव्राजिका**—( सस्मितम् ) अलमुपालम्भेन । विद्यमानेऽपि पत्तने सति ग्रामे रत्नपरीक्षा ।

**राजा**—मा[2] मैवम्; पण्डितकौशिकी खलु भगवती । पक्षपातिनावनयोरहं देवी च ।

**आचार्यौ**—सम्यगाह देवः । मध्यस्था भगवती गुणदोषौ नः परिच्छेत्तुमर्हति ।

**राजा**—तेन हि प्रस्तूयतां विवादः ।

---

परिहासेन परिव्राजिकायां पण्डितकौशिक्यां तद्धर्ममारोपयतीति मन्तव्यम् ॥ **मङ्गलेत्यादि** । मङ्गलालंकृता मङ्गलं शोभनं यथा भवति तथालंकृता भूषितैषा धारिणी यतिवेषया यतेः परिव्राजकस्य वेष इव वेषः काषायादिधारणं यस्याः सा तथोक्ता तया कौशिक्या समं सार्धं भाति प्रकाशते । अत्रोपमामाह—विग्रहवत्या शरीरिण्याध्यात्मविद्यया समं त्रयीव वेदत्रयीव । विग्रहवतीव विभक्तिविपरिणामेन योजनीयम् ॥ **महासारेत्यादि** । महासारप्रसवयोः । महान्सारो वरः प्रसवः संतानं ययोस्ते तयोः । सदृशक्षमयोः सदृशी समाना क्षमा सहिष्णुत्वं ययोस्ते तयोः । शेषं स्पष्टम् ॥ जयतु जयत्वार्यपुत्रः ॥ यदि मां पृच्छसि, तदैतयोर्विवाद एव न मे रोचते ॥

---

**पाठा०—१ विज्ञानसंघर्षिणोर्भगवत्या-टीका०. २ नैतदेवम्.**

**परिव्राजिका**—देव ! प्रयोगप्रधानं हि नाट्यशास्त्रम् । किमत्र वाग्व्यवहारेण ? कथं वा देवी मन्यते ? ।

**देवी**—जइ मं पुच्छसि, तदा एदाणं विवादो एव्व ण मे रोअदि। [ यदि मां पृच्छसि, तदैतयोर्विवाद एव न मे रोचते । ]

**गणदासः**—देवि ! न मां समानविद्यया परिभवनीयमवगन्तु[1]मर्हसि ।

**विदूषकः**—भोदि ! पेक्खामो उरब्भसंवादं[2] । किं मुहा वेअणदाणेण[3] ? । [ भवति ! पश्याम उरभ्रसंवादम् । किं मुधा वेतनदानेन ? । ]

**देवी**—णं कलहप्पिओसि । [ ननु कलहप्रियोऽसि । ]

**विदूषकः**—मा एव्वं, चंडि ! अण्णोण्णकलहिदाणं मत्तहत्थीणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो ? । [ मैवं चण्डि ! अन्योन्यकलहित-योर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ? । ]

**राजा**—ननु स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती ।

**परिव्राजिका**—अथ किम् ।

**राजा**—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ? ।

**परिव्राजिका**—तदेव वक्तुकामास्मि,—

> श्लिष्टा[4] क्रिया कस्यचिदात्मसंस्था
> संक्रान्तिरन्यस्य विशेषयुक्ता ।
> यस्योभयं साधु स शिक्षकाणां
> धुरि प्रतिष्ठापयितव्य एव ॥ १६ ॥

---

भवति ! पश्याम उदरंभरिसंवादम् । किं मुधा वेतनदानेन ? ॥ ननु कलह-प्रियोऽसि ॥ मैवम्; अन्योन्यकलहप्रिययोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ? ॥ **श्लिष्टेत्यादि** । कस्यचित्कस्यापि पुरुषस्य क्रिया शिक्षा, विद्या-भ्यास इत्यर्थः । आत्मसंस्था आत्मनिष्ठा सती श्लिष्टा संगता, रम्या भवती-त्यर्थः । अन्यस्य पुरुषस्य संक्रान्तिः शिष्येषु क्रियासंक्रमणम् । संक्रान्तिशब्दो-ऽत्रान्तर्भावितण्यर्थः । विशेषयुक्तातिशयवती । यस्य पुरुषस्योभयम्, आत्मसिद्धिः परसंक्रमणं च, साधु रम्यं स पुरुष एव शिक्षकाणामुपदेशकानां धुर्यग्रे प्रति-

---

१ °यं मन्तुमर्हसि. २ उअरंभरिसंवादं (=उदरंभरिसंवादं)-टीका०. ३ एदेणं. ४ शिष्टा.

**विदूषकः**—सुदं अज्जेहिं भअवदीए वअणं ?। एसो पिंडिदत्थो उवदेसदंसणेण णिण्णओ त्ति । [ श्रुतमार्याभ्यां भगवत्या वचनम् ?। एष पिण्डितार्थ उपदेशदर्शनेन निर्णय इति ।

**हरदत्तः**—परमुचितं नः ।

**गणदासः**—देवि ! एवं स्थितम् ।

**देवी**—जदा उण मंदमेधा सिस्सा उवदेसं मलिणेदि, तदा आअरिअस्स दोसो णु ?। [ यदा पुनर्मन्दमेधाः शिष्या उपदेशं मलिनयति, तदाचार्यस्य दोषो नु ?। ]

**राजा**—देवि ! एवमापद्यते[1]—विनेतुरद्रव्यपरिग्रहोऽपि[2] बुद्धि-लाघवं प्रकाशयतीति ।

**देवी**—( जनान्तिकम् ) कहं दाणिं ?। ( गणदासं विलोक्य, प्रकाशम् )— अलं अज्जउत्तस्स ऊसाहकालणं मणोरहं पूरिअ । विरम णिरत्थ-आदो आरंभादो । [ कथमिदानीम् ?। अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा । विरम निरर्थकादारम्भात् । ]

**विदूषकः**—सुट्ठु होदी भणादि । भो गणदास ! संगीदपदं लंभिअ सरस्सईउवाअणमोदआणं खादमाणस्स किं दे सुलहणि[3]-ग्गहेण विवादेण ?। [ सुष्ठु भवती भणति । भो गणदास ! संगीतपदं लब्ध्वा सरस्वत्युपायनमोदकान्खादतः किं ते सुलभनिग्रहेण विवादेन ?। ]

**गणदासः**—सत्यमयमेवार्थो देवीवाक्यस्य । श्रूयतामवसरप्राप्त-मिदानीम्

> **लब्धास्पदोऽस्मीति विवादभीरो-**
> **स्तितिक्षमाणस्य परेण निन्दाम् ।**
> **यस्यागमः केवलजीविकायै**
> **तं ज्ञानपण्यं वणिजं वदन्ति ॥ १७ ॥**

---

छापयितव्यः प्रतिष्ठां प्रापयितव्यः । श्रुतमार्याभ्यां भगवत्या वचनम् ?। एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति । अत्र मालविकादर्शनसंदेहनिर्णयाद्यु-क्तिर्नाम संध्यङ्गमुक्तं भवति ॥ यदा पुनर्मन्दमेधाः शिष्या उपदेशं मलिनयन्ति, तदा-चार्यस्य न दोषः । 'नु' प्रश्ने ॥ कथमिदानीम् । अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा । विरम निरर्थकादारम्भात् ॥ सुष्ठु भवती भणति । भो गणदास ! संगीतपदं लब्ध्वा सरस्वत्युपायनमोदकान्खादतः किं ते मुखनिग्रहेण विवादेन ?॥ **लब्धा-स्पदोऽस्मीत्यादि** । स्पष्टोऽर्थः ॥ अचिरोपनीतायां शिष्यायां पुनःप्रतिष्ठितस्योप-

---

**पाठा०—१ उपपद्यते. २ परिग्रह एव. ३ सुमुह–टीका०.**

**देवी**—अइरोवणीदाए[1] सिस्साए उण पडिट्ठिदस्स उवदेसस्स उण अण्णाय्यं पआसणं। [ अचिरोपनीतायां शिष्यायां पुनः प्रतिष्ठितस्योपदेशस्य पुनरन्याय्यं प्रकाशनम्। ]

**गणदासः**—अत एव मे निर्बन्धः।

**देवी**—तेण हि दुवे वि उवदेसं भअवदीए दंसेध। [ तेन द्वावपि उपदेशं भगवत्यै दर्शयतम्। ]

**परिव्राजिका**—देवि! नैतन्न्याय्यम्; सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय।

**देवी**—(आत्मगतम्) मूढे परिव्वाजिए! मं जागत्तिं वि सुत्तं विअ करेसि?। (इति सासूयं परावर्तते) [ मूढे परिव्राजिके! मां जाग्रतीमपि सुप्तामिव करोषि?। ]

(राजा देवीं परिव्राजिकायै दर्शयति)

**परिव्राजिका**—

> अनिमित्तमिन्दुवदने! किमत्रभवतः पराङ्मुखी भवसि?।
> प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः॥ १८॥

**विदूषकः**—णं सकारणं एव। अत्तणो पक्खो रक्खिदव्वोत्ति। (गणदासं विलोक्य) दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवं। सुसिक्खिदो वि सव्वो उवदेसदंसणे ण णिउणो[3] होदि। [ ननु सकारणमेव। आत्मनः पक्षो रक्षितव्य इति। दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व उपदेशदर्शने न निपुणो भवति। ]

**गणदासः**—देवि! श्रूयताम्। एवं जनो गृह्णाति। तदिदानीम्

> विवादे दर्शयिष्यन्तं[2] क्रियासंक्रान्तिमात्मनः।
> यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया॥ १९॥

(इति आसनादुत्थातुमिच्छति)

---

देशस्यान्याय्यं प्रकाशनम्। तेन हि द्वावप्युपदेशं भगवत्यै दर्शयतम्॥ मूढे परिव्राजिके! मां जाग्रतीमपि सुप्तामिव करोषि॥ **अनिमित्तमित्यादि**। स्पष्टोऽर्थः॥ ननु सकारणमेव आत्मनः पक्षो रक्षितव्यः। दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व उपदेशदर्शने न निष्णातो भवति। अत्र देवीकोपेन वस्तुविच्छेदे प्राप्ते विदूषककृतं प्रोत्साहनमुत्तराङ्कोपयोगित्वेनाविच्छेदकारणत्वाद्बिन्दुरित्यनुसंधेयम्॥ **विवाद इत्यादि**। स्पष्टोऽर्थः॥ का गतिः?। प्रभवत्याचार्यः शिष्य-

---

**पाठा०**—१ अइरोवणीदा दे सिस्सा। ता अवरिणिट्ठिदस्स उवदेसस्स अण्णअं. २ दर्शयिष्यामि. ३ णिण्हादो-टीका०.

**देवी**—(स्वगतम्) का गई ? । (प्रकाशम्) पहवदि आआरिओ सिस्सजणस्स । [का गतिः ? । प्रभवत्याचार्यः शिष्यजनस्य ।]

**गणदासः**—चिरमपदेशङ्कितोऽस्मि । (राजानमवलोक्य) अनुज्ञातं देव्या । तदाज्ञापयतु देवः कस्मिन्नभिनेयवस्तुनि प्रयोगं दर्शयिष्यामि ।

**राजा**—यदादिशति भगवती ।

**परिव्राजिका**—किमपि देव्या मनसि वर्तते, ततः शङ्कितास्मि ।

**देवी**—भण वीसद्धं । पहवदि प्पहू अत्तणो परिअणस्स । [भण विस्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य ।]

**राजा**—मम चेति ब्रूहि ।

**देवी**—भअवदि ! भण दाणिं । [भगवति ! भणेदानीम् ।]

**परिव्राजिका**—देव ! शर्मिष्ठायाः कृतिं चतुष्पादोत्थं छलिकं दुष्प्रयोज्यमुदाहरन्ति । तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः । तावता ज्ञायत एवात्रभवतोरुपदेशातारतम्यम् ।

**आचार्यौ**—यदाज्ञापयति भगवती ।

**विदूषकः**—तेण हि दुवे वि वग्गा पेक्खाघरे संगीदरअणं करिअ अत्तभवदो दूदं पेसअह । अह वा मुदंगसद्दो एव्व णो उत्थावइस्सदि । [तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वात्रभवतो दूतं प्रेषयतम् । अथवा मृदङ्गशब्द एव नोत्थापयिष्यति ।]

**हरदत्तः**—तथा । (इत्युत्तिष्ठति)

(गणदासो धारिणीमवलोकयति)

**देवी**—(गणदासं विलोक्य) विअई भोदु णहु । विअअपच्चत्थिणी अहं आअरिअस्स । [विजयी भव । ननु विजयाभ्यर्थिनी अहमाचार्यस्य ।]

(आचार्यौ प्रस्थितौ)

**परिव्राजिका**—इतस्तावदाचार्यौ ।

---

जनस्य ॥ भण विस्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य ॥ भगवति ! भणेदानीम् ॥ तेन हि द्वावपि वर्गौ प्रेक्षागृहे संगीतरचनां कृत्वात्रभवतो दूतं प्रेषयतम् । अथ वा मृदङ्गशब्द एव न उत्थापयिष्यति ॥ विजयी भव । ननु विजयप्रत्यर्थिनी अह-

पाठा०—१ अपदेश°-टीका०.

**आचार्यौ**—( परिवृत्य ) इमौ स्वः ।

**परिव्राजिका**—निर्णयाधिकारे ब्रवीमि । सर्वाङ्गसौष्ठवाभिव्यक्तये[1] विरलनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ।

**आचार्यौ**—नेदमप्यावयोरुपदेश्यम् । ( इति निष्क्रान्तौ )

**देवी**—( राजानमवलोक्य ) जइ राअकज्जेसु ईरिसी उवाअणिउणदा अज्जउत्तस्स तदो सोण्हं भवे । [ यदि राजकार्येष्वीदृश्युपायनिपुणतार्यपुत्रस्य ततः शोभनं भवेत् । ]

**राजा**—

> अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।
> प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ २० ॥

( नेपथ्ये मृदङ्गध्वनिः, सर्वे कर्णं ददति )

**परिव्राजिका**—हन्त, प्रवृत्तं संगीतम् । तथा ह्येषा

> जीमूतस्तनितविशङ्किभिर्मयूरैरुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
> निर्ह्रादिन्युपहितमध्यम[2]स्वरोत्था मायूरी मदयति मार्जना मनांसि २१

मार्यस्य॥ **सर्वाङ्गेत्यादि**। अत्र गुणवत्त्वस्य गम्यमानत्वाद्विलोचनं नाम संध्यङ्गमुक्तं भवति ॥ यदि राजकार्येष्वीदृश्युपायनिपुणतार्यपुत्रस्य, ततः शोभनं भवेत् । अत्र गूढार्थोद्भेदनादुद्भेदो नाम संध्यङ्गमुक्तं भवति ॥ **अलमन्यथा गृहीत्वेत्यादि** । स्पष्टोऽर्थः ॥ **जीमूतस्तनितेत्यादि** । जीमूतस्तनितविशङ्किभिर्जीमूतस्य स्तनितं गर्जितं विशङ्कन्त इति तथोक्तास्तैरुद्ग्रीवैरुत्कण्ठैर्मयूरैः शिखण्डिभिरनुरसितस्यानुध्वनितस्य पुष्करस्य वाद्यभाण्डमुखस्य मायूरी मयूरप्रिया मार्जना मनांसि मदयति हर्षयति । कीदृशी मार्जना? । उपहितमध्यमस्वरोत्था उपहितो योजितो मध्यमस्वरो मध्यसंज्ञकस्वरस्तस्मादुत्तिष्ठत्युदेतीति तथोक्ता । निर्ह्रादिन्यतिशयनिनादा । मार्जना नाम पुष्करवाद्यनामविशेषः । तथोक्तं **भारतीये**—'षोडशाक्षरसंपन्नं चतुर्मार्गं तथैव च ॥ द्विलेपनं षड्करणं त्रियति त्रिलयं तथा । त्रिगतं त्रिप्रचारं च त्रिसंयोगं त्रिपाणिकम् ॥ दशार्धपाणिप्रहतं त्रिप्रहारं त्रिमार्जनम् । एभिरङ्गैस्तु संपन्नं वाद्यं पुष्करजं भवेत् ॥' तत्र 'मायूरी चार्धमायूरी तथा कार्मारवीति च । तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे । मध्यमश्चोर्ध्वगः कार्यो मायूर्यास्तु स्वरास्त्वमी ॥ वामके पुष्करे षड्ज ऋषभो दक्षिणे तथा ।

टिप्प०—1 तथा चोक्तं भरतीय**नाट्यशास्त्रे**—'नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्ययोः । नाट्यं नृत्यं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ॥' इति । 2 ते च स्वराश्चोक्ता अन्यत्र—'षड्जर्षभश्च गान्धारो मध्यमः पञ्चमस्तथा । धैवतश्च निषादश्च सप्त तन्त्र्युद्भवाः स्वराः ॥' इति ।

**राजा**—देवि ! तस्याः सामाजिका भवामः ।

**देवी**—( स्वगतम् ) अहो, अविणओ अज्जउत्तस्स । [ अहो, अविनय आर्यपुत्रस्य । ]

( सर्वे उत्तिष्ठन्ति )

**विदूषकः**—(अपवार्य) भो ! धीरं गच्छ । मा अत्तहोदी धारिणी विसंवादइस्सदि । [ भोः ! धीरं गच्छ । माऽत्रभवती धारिणी विसंवादयिष्यति । ]

**राजा**—

> **धैर्यावलम्बिनमपि त्वरयति मां [1]मुरजवाद्यनादोऽयम् ।**
> **अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥**

( इति निष्क्रान्ताः सर्वे )



इति प्रथमोऽङ्कः ।

---

धैवतश्चोर्ध्वगोत्रार्धम[illegible] निर्दिशेद्बुधः ॥ ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे । पञ्चमश्चोर्ध्वग[illegible] कुर्यात् काम[illegible] अमी ॥' इति ॥ अहो, अविनय आर्यपुत्रस्य ॥ भोः धीरं गच्छ । तत्रभवती धारिणी विसंवादयिष्यति ॥ **धैर्यावलम्बिनमित्यादि ।** अयं मुरजवाद्य[illegible] मुरजवाद्यस्य रञ्जकत्वं धैर्यावलम्बिनमपि मां त्वरयति संभ्रमयति । सिद्धस्य सिद्धिमार्गमवतरतः प्राप्नुवतः स्वमनोरथस्यात्मवाञ्छितस्य शब्द इव ध्वनिरिव । अत्र बीजस्य पुनरावर्तनात्समाधानं नाम संध्यङ्गमुक्तं भवति । अत्रैव सुखागमस्य गम्यमानत्वात्प्राप्तिर्नाम संध्यङ्गमुक्तं भवति । अत्रोपक्षेपादिषु संध्यङ्गेषु कतिचिदेव कविनोक्तानि नेतराणि तथापि न दोषः । 'न्यूनमप्यत्र यैः कैश्चिदङ्गैर्नाट्यं न दुष्यति । यद्युपात्तेषु संपत्तिराराधयति तद्विदः ॥' इति वचनात् । अत्र नृत्यदर्शननिश्चयान्ते प्रथमाङ्कार्थे समाप्तेऽपि तमसमाप्यैवोत्तराङ्कादौ विष्कम्भादौ प्रतिपाद्यायाः संगीतरचनाया अत्रैव निपातनादङ्कावतरणं नामार्थोपक्षेपकमुक्तं भवति । यथोक्तम् ( द. रू. १।६२ )—'अङ्कावतारस्त्वङ्कान्ते पात्रेणाङ्कस्य सूचनात्' इति ॥

**इतिश्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये**
**मालविकाग्निमित्रव्याख्याने प्रथमोऽङ्कः ॥**



---

**पाठा०**—१ मुरजवाद्यरागो-टीका०.

## द्वितीयाङ्कस्य कथावस्तु

यथानिर्देशं कृतसंगतिरचनायां नाट्यशालायां सवयस्य आसनस्थः समुत्सुको राजा देव्या धारिण्या पण्डितकौशिक्या परिवारेण च समेतस्तत्र प्रविशति । ततो मालविकादर्शनसमुत्सुकेन राज्ञा 'कतरस्य प्रथममुपदेशं द्रक्ष्यामः ?' इति पृष्टे परिव्राजिकया 'समानेऽपि ज्ञान-वृद्धभावे वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति' इति निर्णायितम् । अथ च नाट्याचार्यगणदासोपदिष्टामालविकोपगानं कृत्वा 'दुर्लभः प्रियस्तस्मिन्भव हृदय ! निराशमहो अपाङ्गको मे प्रस्फुरति किमपि वामः । एष स चिरदृष्टः कथमुपनेतव्यो नाथ ! मां पराधीनां त्वयि गणय सतृष्णाम्' इति शर्मिष्ठायाः कृतेर्लयमध्यं भावगर्भितं चतुष्पदं गायति रसानुगुणमभिनयति च । तस्याः कमनीयेनाभिनयेनाङ्गसौष्ठवेन च नितरां मुग्धो राजा 'चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृद-यम् । संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता' इति मन्यते स्म । गौतमोऽपि 'चतुष्पदकं द्वारीकृत्य त्वय्युपस्थित इवात्मा मालवि-कया' इत्यभिधत्ते । गीतान्ते निष्क्रम्यमाणां मालविकां क्रमभेदवि-स्मरणमिषेण विदूषकेणान्तरितां विलोक्य 'उपदेशविशुद्धा यास्यसि' इत्याचार्यगणदासस्तामादिदेश । मालविकायाः सुमनोहरवपुःसौन्दर्य-निरीक्षणेन तस्यामनुरागः समजनीति स्फुटं कथयति स्वयमेव राजा-ङ्कावसाने 'सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तस्य । सा वामलो-चना मे स्नेहस्यैकायनीभूता' इति । संप्रत्युपारूढो मध्याह्नः, भोजनवेला च संवृत्तेत्याचार्यहरदासस्योपदेशं वयं श्वो द्रक्ष्याम इत्युक्त्वा सर्वे निष्क्रान्ता इति वस्तु संग्रथितमत्र ।

# द्वितीयोऽङ्कः

( ततः प्रविशति संगीतरचनायां कृतायामासनस्थः सवयस्यो राजा धारिणी परिव्राजिका विभवतश्च परिवारः )

**राजा**—भगवति! अत्रभवतोराचार्ययोः प्रथमं कतरस्योपदेशं द्रक्ष्यामः?।

**परिव्राजिका**—ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति।

**राजा**—तेन हि मौद्गल्य! एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु।

**कञ्चुकी**—यदाज्ञापयति देवः। ( इति निष्क्रान्तः )

( प्रविश्य )

**गणदासः**—देव! शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्याश्चतुर्थवस्तुनः प्रयोगमेकमनाः श्रोतुमर्हति देवः।

**राजा**—आचार्य! बहुमानादवहितोऽस्मि।

( निष्क्रान्तो गणदासः )

**राजा**—( जनान्तिकम् ) वयस्य!

**नेपथ्यपरिगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।**
**संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम्॥ १॥**

---

कविरिदानीमङ्कान्तरं प्रस्तौति—**ततः प्रविशतीत्यादि**। 'भगवति! अत्रभवतोः' इत्यादिना 'गणदासः पुरस्कारमर्हति' इत्यन्तेन प्रतीयमानं राज्ञ उपायतो मालविकादर्शनप्रवर्तनं प्रयत्नो नाम द्वितीयावस्थितिरिति मन्तव्यम्। अत्र बिन्दुप्रयत्नयोः समन्वयात्प्रतिमुखसंधिरित्यनुसंधेयम्॥ **देव,! शर्मिष्ठाया इत्यादि**। शर्मिष्ठा नाम वृषपर्वणो राक्षसराजस्य दुहिता। तस्याः कृतिः काव्यम्। लयमध्या लयेन तालकालेन मध्या मध्यमानयुक्ता। चतुष्पदा चत्वारि पदानि खण्डानि यस्याः सा तथोक्ता। तस्याः कृतिसंबन्धिनश्चतुर्थवस्तुनश्चतुर्थस्य तुर्यस्य वस्तुनः प्रबन्धस्य प्रयोगमभिनयमेकमना अवहितः सन् श्रोतुमर्हति। अत्र शृङ्गारस्य प्रतिपाद्यमानत्वाल्लयमध्येत्युक्तम्। तथा चोक्तं **भारतीये**—'शृङ्गारहास्ययोर्मध्यलयः। करुणे विलम्बितः। वीररौद्राद्भुतबीभत्सभयानकेषु द्रुतः॥ **नेपथ्यपरिगताया इति**। नेपथ्यपरिगताया जवनिकान्तरस्थितायास्तस्या मालविकाया दर्शनसमुत्सुकमवलोकनोत्कण्ठितं मे चक्षुरधीरतया तरलतया तिरस्करिणीं जवनिकां संहर्तुमपनेतुं व्यवसितमिवोद्युक्तमिव। अत्रेष्टार्थविषयेच्छाया गम्यमा-

**विदूषकः**—( अपवार्य ) उवट्ठिदं णअणमहु संणिहिदमक्खिअं च । ता अप्पमत्तो दाणिं पेक्ख । [ उपस्थितं नयनमधु संनिहितमक्षिकं च तदप्रमत्त इदानीं पश्य । ]

( ततः प्रविशत्याचार्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका )

**विदूषकः**—( जनान्तिकम् ) पेक्खदु भवं । ण खु से पडिच्छंदादो परिहीअदि महुरदा । [ पश्यतु भवान् । न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता । ]

**राजा**—( अपवार्य ) वयस्य !

**चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।**
**संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥**

**गणदासः**—वत्से ! मुक्तसाध्वसा सत्त्वस्था भव ।

**राजा**—( आत्मगतम् ) अहो, सर्वस्थानानवद्यता रूपविशेषस्य । तथा हि—

---

न्त्वाद्विलासो नाम संध्यङ्गमुक्तं भवति ॥ उपस्थितं नयनमधु संनिहितमक्षिकं च । तस्मादप्रमत्त इदानीं पश्य ॥ **ततः प्रविशतीत्यादि** । आचार्यावेक्ष्यमाणाङ्गसौष्ठवा आचार्येण गणदासेनावेक्ष्यमाणमङ्गानां सौष्ठवं यस्याः सा तथोक्ता । सौष्ठवं नामाङ्गानां शोभनोऽवस्थानविशेषः । यथोक्तम्—'अनुच्चनीचचलतामङ्गानां समपादताम् । कटिकूर्परशीर्षांसकण्ठानां समरूपताम् ॥ रम्यां प्रतीकविश्रान्तिमुरसश्च समुन्नतिम् । अभ्यासोपहितामाहुः सौष्ठवं नृत्यवेदिनः ॥' पश्यतु भवान् । न खल्वस्याः प्रतिच्छन्दात्परिहीयते मधुरता ॥ अत्रापवार्येत्येतन्नियतश्राव्यार्थभेदस्यापवारितस्य विवक्षितत्वं कविना प्राक्प्रयुक्तमिति मन्तव्यम् । यथोक्तं **वसन्तराजीये**—'अर्थस्त्वेकेन विज्ञेयो नियतश्राव्य इष्यते । द्विविधः स परिज्ञेयो जनान्तश्चापवारितः ॥' अत्र–'परैरलक्ष्यव्यापारं कथितोऽर्थोऽपवारितः । उक्त्वा प्रागपवार्येति पश्चादेनं प्रयोजयेत् ॥' इति ॥ **चित्रगतायामित्यादि** । मे हृदयं मनश्चित्रगतायामालेख्यगतायामस्यां मालविकायां कान्तिविसंवादशङ्कि कान्तेः शोभाया विसंवादं विपर्यासं शङ्कत इति तथोक्तम् । संप्रतीदानीम्, साक्षाद्दर्शनवेलायामित्यर्थः । इयं मालविका येन चित्रकारेणालिखिता तं चित्रकारं शिथिलसमाधिं शिथिलप्रयत्नं मन्ये जानामि ॥ मुक्तसाध्वसा परित्यक्तभया, सभाकम्परहितेत्यर्थः । सत्त्वस्था सत्त्वगुणयुक्ता । अविकृता भवेत्यर्थः । यथोक्तम्—'चित्तस्याविकृतिः सत्त्वं विकृतेः कारणे सति' इति । अत्र विकृतिकारणं नायकसंनिधिः ॥ 'अहो' इत्याश्चर्ये । सर्वस्थानानवद्यता सर्वेषु स्थानेषु सर्वावयवेष्वनवद्यत

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितो नितम्बि जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसः श्लिष्टं तथास्या वपुः ॥ ३ ॥

मालविका—(उपगानं कृत्वा, चतुष्पदवस्तु गायति)

दुल्लहो पिओ मे तस्सिं भव हिअअ ! णिरासं
अम्हो अपंगओ मे परिप्फुरइ किं पि वामो ।
एसो सो चिरदिट्ठो कहं उण उवणइदव्वो
णाह ! मं पराहीणं तुइ परिगणअ सतिण्हं ॥ ४ ॥

[ दुर्लभः प्रियो मे तस्मिन्भव हृदय ! निराश-
महो अपाङ्गो मे परिस्फुरति किमपि वामः ।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ ! मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥ ]

(ततो यथारसमभिनयति)

विदूषकः—(जनान्तिकम्) भो वअस्स ! चउप्पदवत्थुअं दुवारी-करिअ तुइ उवट्ठाविदो विअ अप्पा तत्तहोदीए । [ भो वयस्य ! चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित इवात्मा तत्रभवत्या । ]

---

निर्दोषता । रमणीयतेत्यर्थः । दीर्घाक्षमित्यादि । वदनं मुखं दीर्घाक्षं दीर्घे आयते अक्षिणी लोचने यस्य तत्तथोक्तम् । शरदिन्दुकान्ति शरदिन्दोः शरच्चन्द्रस्य कान्तिरिव कान्तिर्यस्य तत्तथोक्तम् । बाहू भुजावंसयोः स्कन्धयोर्नतौ नम्रौ । मध्योऽवलग्नः पाणिमितः पाणिना हस्तेन मितः परिमितः । जघनं नितम्बि नितम्बातिशययुक्तम् । पादौ चरणावरालाङ्गुली अराला आकुञ्चिता अङ्गुलयो ययोस्तौ तथोक्तौ । अस्या मालविकाया वपुः शरीरं नर्तयितुर्नृत्ताचार्यस्य छन्दोऽभिप्रायो यथा यादृशस्तथा तेन प्रकारेण श्लिष्टं संगतम् । अनेन नर्तक्या नृत्तारम्भोचितावस्थानविशेष उक्तः । तथा चोक्तं वसन्तराजीये—'अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ । आरम्भे सर्वनृत्तानामेतत्सामान्यमिष्यते ॥' इति ॥ उपगानं रागदीप्तं कृत्वा चतुष्पदवस्तु चतुष्पदसंज्ञकं प्रबन्धं गायति । वस्त्विति प्रबन्धः । 'प्रबन्धो रूपकं वस्तु निबन्धस्याभिधात्रयम्' इत्युक्तत्वात् । दुर्लभः प्रियो मे तस्मिन्भव हृदय ! निराशम् । अहो अपाङ्गो मे परिस्फुरति किमपि वामः । एष स चिरदृष्टः कथं पुनरुपनेतव्यः । नाथ ! मां पराधीनां त्वयि परिगणय सतृष्णाम् ॥ ततो गानानन्तरं यथारसं रसानुकूलमभिनयति । अत्र रसोऽयोगविप्रलम्भशृङ्गारः । यथोक्तम्—'अप्राप्तिर्विप्रलम्भः स्यायूनोर्जाताभिलाषयोः । विप्रलम्भस्य भेदाः स्युरयोगो विरहस्ततः ॥ प्रवासः शापः करुणा मानश्चेति च षण्मताः ॥' तत्र 'संप्राप्ते प्रागसङ्गो यस्तमयोगं प्रचक्षते' इति । अत्र चतुष्पद्याः क्रमेण पादचतुष्टये

**राजा**—सखे! एवमेव ममापि हृदयम्। अनया खलु

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम्।
प्रणयगतिमदृष्ट्वा धारिणीसंनिकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

(मालविका गीतान्ते निष्क्रमितुमिच्छति)

**विदूषकः**—भोदि! चिट्ठ। किंपि वो विसुमरिदो कम्म-भेदो[1]। तं दाव पुच्छिस्सं। [भवति! तिष्ठ। किमपि वो विस्मृतः क्रमभेदः। तं तावत्प्रक्ष्यामि।]

**गणदासः**—वत्से! स्थीयताम्। उपदेशविशुद्धा यास्यसि।

(मालविका निवृत्य स्थिता)

**राजा**—(आत्मगतम्) अहो, सर्वास्ववस्थासु चारुता शोभां पुष्यति। तथा हि

---

निर्वेदः सविस्मयो हर्षश्चिन्ता दैन्यं चेति संचारिभावास्तत्तदनुभावैर्मुखरागादिभिः सम्यक्प्रकाशिता इत्यनुसंधेयम्। तेषां लक्षणमुक्तं **वसन्तराजीये**—'इष्टार्थविरहव्याधिनिन्दापदवमाननैः। दारिद्र्यताडनाक्षेपपरवृद्ध्यवलोकनैः। निष्फलत्वमतिर्नृणां निर्वेदो जीवितादिषु ॥' अत्रेष्टार्थविरहजनितो निर्वेदः। 'अन्तर्बाष्पोद्गमध्याननिःश्वासस्वावमाननैः। दैन्यगद्गदवैवर्ण्यैरभिनेयो भवेदयम् ॥ हर्षो मनःसमुल्लासो गुरुदेवमहीभुजाम्। प्रसादात्प्रियसङ्गाच्च भवेदिष्टार्थलाभतः ॥' अत्रेष्टार्थलाभजनितो हर्षः; अपाङ्गस्फुरणस्येष्टार्थलाभहेतुत्वात्। 'मुखनेत्रप्रसन्नत्वप्रियोक्तिःपुलकोद्गमैः। दानत्यागपरीरम्भैरभिनेयो भवेदयम् ॥ इष्टालाभादिष्टनाशादनिष्टाप्तेश्च दैन्यतः। चित्तस्यैकाग्रता चिन्ता'। अत्र चिन्तेष्टालाभजनिता। 'स्मरणं चानुपस्मृतिः॥ संतापोच्छ्वासनिःश्वासा मान्द्यमिन्द्रियकर्मणाम्। अधोमुखत्वमित्याद्यैरभिनेयो भवेदयम् ॥ अनौजस्त्वं तु मनसो दैन्यमित्यभिधीयते। मनःसंतापदारिद्र्यचिन्तौत्सुक्यादिभिर्भवेत् ॥' अत्रौत्सुक्यजनितं दैन्यम्। 'अङ्गानामपि शैथिल्यं देहसंस्कारवर्जनम्। अश्चितं शिरस्तस्मिन्ननुभावाः प्रकीर्तिताः ॥' इति ॥ भोः! चतुष्पदवस्तुकं द्वारीकृत्य त्वय्युपस्थापित इवात्मा तत्रभवत्या ॥ **जन मिममित्यादि**। नाथ स्वामिन्! इमं जनम्, मामित्यर्थः; अनुरक्तं स्निग्धम्, त्वयीति शेषः। विद्धि जानीहि। इत्येवंविधे गेये गीते। वचनं 'णाह मं पराहीणं' इत्यादिवाक्यं स्वाङ्गनिर्देशपूर्वमात्मशरीरप्रदर्शनपूर्वं यथा भवति तथाभिनयन्त्या हस्तादिभिः प्रकाशीकुर्वत्या अनया मालविकया धारिणीसंनिकर्षाद्धेतोः प्रणयगतिं मम स्नेहप्रवृत्तिमदृष्ट्वाऽज्ञात्वा। अनुभावानामप्रकाशनादिति भावः। सुकुमारप्रार्थनाव्याजं सुकुमारा मृदुला, रसनीयेत्यर्थः। सा चासौ प्रार्थना सैव व्याजोऽपदेशो यस्मिन्कर्मणि तत्तथो-

---

पाठा०—१ कम्मभेदो-टीका०।

**वामं संधिस्तिमितवलयं न्यस्य हस्तं नितम्बे**
**कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।**
**पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं**
**नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥ ६ ॥**

**देवी**—णं गोदमवअणं वि अज्जो हिअए करेदि । [ ननु गौतमवचनमप्यार्यो हृदये करोति । ]

**गणदासः**—देवि ! मा मैवम् । दैवप्रत्ययात्संभाव्यते सूक्ष्मदर्शिता गौतमस्य । पश्य

**मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।**
**पङ्कच्छिदः[1] फलस्येव निकषेणाविलं पयः ॥ ७ ॥**

( विदूषकं विलोक्य ) तच्छृणुमो वयं विवक्षितमार्यस्य ।

**विदूषकः**—( गणदासं विलोक्य ) सक्खिणीं[1] दाव पुच्छ । पच्छा जो मए कम्मभेदो लक्खिदो[2] तं भणिस्सं । [ साक्षिणीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो लक्षितस्तं भणिष्यामि । ]

**गणदासः**—भगवति ! यथादृष्टमभिधीयतां गुणो वा दोषो वा ।

**परिव्राजिका**—यथादृष्टं सर्वमनवद्यम् । कुतः

---

क्तम् । अहमुक्त इवोदित इव ॥ भवति ! तिष्ठ । किमपि वो विस्मृतः कर्मभेदः । तं तावत्प्रक्ष्यामि ॥ वत्से ! क्षणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि ॥ **वाममित्यादि ।** संधिस्तिमितवलयं संधौ मणिवन्धे स्तिमितं निश्चलं वलयं कङ्कणं यस्य स तथोक्तः । तं वामं सव्यं हस्तं नितम्बे न्यस्य निधाय । श्यामाविटपसदृशं फलिनीशाखासंनिभं द्वितीयं दक्षिणं हस्तं स्रस्तमुक्तं स्रस्तं शिथिलं यथा भवति तथा मुक्तं विसृष्टम्, लम्बितमित्यर्थः । कृत्वा विधाय । पादाङ्गुष्ठालुलितकुसुमे पादाङ्गुष्ठेनालुलितमामृष्टं कुसुमं यस्य तत्तथोक्तं तस्मिन्कुट्टिमे स्फटिकादिखचितस्थले पातिते व्यापारिते अक्षिणी यस्मिन्कर्मणि तथोक्तम् । ऋज्वायतार्धम् ऋजु अवक्रमायतं दीर्घं अर्धं शरीरस्योर्ध्वभागो यस्य तत्तथोक्तम् । अस्याः स्थितमवस्थानं नृत्तान्नर्तनादतितरामत्यर्थं कान्तं मनोहरं भवति । अत्र वाक्यस्य विशेषितत्वात्पुष्पं[2] नाम संध्यङ्गमुक्तं भवति ॥ ननु गौतमवचनमप्यार्यो हृदये करोति ॥ **मन्दोऽप्यमन्दतामेतीति** । स्पष्टोऽर्थः । अस्य वाक्यस्योपपत्तिमत्त्वादुपन्यासो नाम संध्यङ्गमुक्तं भवति । कौशिकीं तावत्पृच्छ । पश्चाद्यो

---

**पाठा०**—१ कोसिइं–**टीका०.** २ दिट्ठो–**टीका०.**

---

**टिप्प०**—1 कतक ( निर्मली )फलसंयोगेन सकर्दममपि पयो विमलं भवतीति दृष्टचरम् । 2 तल्लक्षणं **दशरूपके** ( १।३४ )—'पुष्पं वाक्यं विशेषवत्' इति ।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमनुगतस्तन्मयत्वं रसेषु।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥ ८ ॥

गणदासः—देवः कथं[1] वा मन्यते ?।

राजा—वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः।

गणदासः—अद्य नर्तयितास्मि। कुतः

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः।
श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ ९ ॥

देवी—दिट्ठिआ अपरिक्खदाराहणेण अज्जो वड्ढइ। [ दिष्ट्याऽपरिक्षताराधनेनार्यो वर्धते।]

---

मया कर्मभेदो दृष्टस्तं भणिष्यामि ॥ **अङ्गैरित्यादि**। अन्तर्निहितवचनैरन्तर्निहितान्यभ्यन्तरस्थापितानि वचनानि पदानि यैस्तैरङ्गैर्हस्तादिभिः। अत्राभ्यासपाटवादङ्गानां स्वत एवान्तर्निहितवचनत्वमुत्प्रेक्षितमिति मन्तव्यम्। अर्थो गीतार्थः। सम्यक् साधु। सूचितः प्रकाशितः। पादन्यासः पादस्य न्यासो विन्यासः। लयमनुगतोऽनुसृतः। लयो नाम तालमानम्। 'तालवर्ती तु यः कालः स काललयनाल्लयः' इत्युक्तत्वात्। अत्र पादन्यासस्य स्वतो लयानुसरणमभ्यासपाटवादिति मन्तव्यम्। रसेषु रसविषयेषु तन्मयत्वं तादात्म्यम्, रसात्मता भवतीत्यर्थः। अत्र 'रस'शब्देनोपचारात्परितोषातिशयवत्त्वादिभावाः कथ्यन्ते। प्रकृतरसस्यैकत्वात् 'रसेषु' इति बहुवचनानुपपत्तिप्रसङ्गात्। अभिनयः प्रयोगः। यथोक्तम्—'प्रयोगो यस्तु नाट्यादेर्भवेदभिनयो हि सः' इति। शाखायोनिः शाखा योनिः प्रभवो यस्य स तथोक्तस्तथाविधः सन्। मृदुः सुकुमारः। शाखा नाम नृत्तहस्तानां मानप्रचारः। यथोक्तम्—'शाखा तु नृत्तहस्तानां या मात्रोचितनर्तनी' इति। तद्विकल्पानुवृत्तौ तस्याभिनयस्य विकल्पो भेदस्तस्यानुवृत्तिरनुगतिः प्राप्तिः। तस्यां सत्यां भावः अभिनीयमानो निर्वेदादिर्विषयादाश्रयात्, प्रकृतात्स्थायिन इत्यर्थः। भावं पूर्वाभिमानादानीतं संचारिणं नुदत्यपाकरोति। रागबन्धो रञ्जनत्वयोगः, स एव पूर्वं यादृशस्तादृश एवेत्यर्थः ॥ **उपदेशं विदुरित्यादि**। उपदेशिनः शिक्षकस्य। युष्मासु युष्मादृशेषु, विवेकिष्वित्यर्थः। न श्यामायते न मलिनीभवति। 'लोहितादिडाज्भ्यः क्यष्' (पा. ३।१।१३) इति क्यष्। 'वा क्यषः' (पा. १।३।९०) इति विकल्पादात्मनेपदम् ॥ दिष्ट्या अपरिक्षताराधनेनार्यो वर्धते ॥ प्रथमोपदेशदर्शने

---

**पाठा०**—१ कथं मन्यते.

---

**टिप्प०**—1 अत्र भावसाम्यस्य कृते—'हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा।' इति पद्यं द्रष्टव्यम्।

**गणदासः**—देवीपरिग्रह एव मे वृद्धिहेतुः । ( विदूषकं विलोक्य ) गौतम ! वदेदानीं यत्ते मनसि वर्तते ।

**विदूषकः**—पढमोवदेसदंसणे पढमं बम्हणस्स पूजा कादव्वा । सा णं वो विसुमरिदा । [ प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता । ]

**परिव्राजिका**—अहो प्रयोगाभ्यन्तरः प्राश्निकः ।

( सर्वे प्रहसिताः, मालविकाऽपि स्मितं करोति )

**राजा**—( आत्मगतम् ) आत्तसारश्चक्षुषा मे स्वविषयः । यदनेन

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेसरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

**गणदासः**—महाब्राह्मण ! न खलु प्रथमं नेपथ्यसङ्गीतकमिदम् । अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः ? ।

**विदूषकः**—मए णाम मुद्धचादएण सुक्खघणगज्जिदे अंतरिक्खे जलपाणं इच्छिदं । अहवा पंडितसंतोसपच्चआ णं मूढा जादी । जदि अत्तहोदीए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छामि । [ मया नाम मुग्धचातकेनेव । शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छितम् । अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यतोऽत्रभवत्या शोभनं भणितं तत इदं ते पारितोषिकं प्रयच्छामि । ] ( इति राज्ञो हस्तात्कटकमाकर्षति )

**देवी**—चिट्ठ दाव । गुणंतरं अजाणंतो किंणिमित्तं तुमं आहरणं देसि ? । [ तिष्ठ तावत् । गुणान्तरमजानन्किंनिमित्तं त्वमाभरणं ददासि ? । ]

---

प्रथमं ब्राह्मणस्य पूजा कर्तव्या । सा ननु वो विस्मृता । **प्रथमोपेति** । अत्र परिहासस्य गम्यमानत्वान्नर्मेति संध्यङ्गमुक्तं भवति । **स्मयमानमित्यादि** । स्पष्टोऽर्थः । नेपथ्यसवनं नाट्यमण्डपे विघ्नोपशान्तये ॥ प्रथमं क्रियमाणो यज्ञः दक्षिणीयो दक्षणार्हः । मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् । अथवा पण्डितसंतोषप्रत्यया ननु मूढजातिः । यतोऽत्रभवत्या शोभनं भणितं तत इदं ते पारितोषिकं प्रयच्छामि ॥ तिष्ठ तावत् । गुणान्तरमजानन्किंनिमित्तं त्वमाभरणं ददासि ?॥ परकीयमिति कृत्वा ॥ आर्य गणदास ! ननु दर्शितोपदेशा ते शिष्या । अनेन मालविकानिर्गमनहेतुना देवीवचनेन राज्ञो हितरोधनान्निरोधो नाम संध्यङ्गमुक्तं भवति ॥ एतावान्मे मतिविभवो

---

**पाठा०**—१ परिग्रहश्च मे. २ प्रश्नः-**टीका०**. ३ अर्चनीयं.

---

**टिप्प०**—1 तल्लक्षणं चोक्तं 'परिहासवचो नर्म' इति । 2 लक्षणं चास्योक्तं **दशरूपके**-'हितरोधो निरोधनम्' इति ।

**विदूषकः**—परकेरअंति करिअ। [परकीयमिति कृत्वा।]

**देवी**—(आचार्यं विलोक्य) अज्ज गणदास! णं दंसिदोवदेसा दे सिस्सा। [आर्य गणदास! ननु दर्शितोपदेशा ते शिष्या।]

**गणदासः**—वत्से! एहि गच्छाव इदानीम्।

(मालविका सहाचार्येण निष्क्रान्ता)

**विदूषकः**—(जनान्तिकम्) एत्तिओ मे मदिविहवो भवंतं सेविदुं। [एतावान्मे मतिविभवो भवन्तं सेवितुम्।]

**राजा**—अलमलं परिच्छेदेन। अहं हि

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम्॥ ११॥

**विदूषकः**—(जनान्तिकम्) साहु, तुमं दलिद्दो विअ आदुरो वेज्जेण ओसदं दीअमाणं इच्छसि। [साधु, त्वं दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि।]

(प्रविश्य)

**हरदत्तः**—देव! मदीयमिदानीं प्रयोगमवलोकयितुं क्रियतां प्रसादः।

**राजा**—(आत्मगतम्) अवसितो दर्शनार्थः। (दाक्षिण्यमवलम्ब्य, प्रकाशम्) हरदत्त! ननु पर्युत्सुका एव वयम्।

**हरदत्तः**—अनुगृहीतोऽस्मि।

(नेपथ्ये)

**वैतालिकः**—जयतु जयतु देवः। उपारूढो मध्याह्नः। तथा हि

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि।
विन्दुक्षेपान्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रैस्त्वमिव नृपगुणैर्दीप्यते सप्तसप्तिः॥ १२॥

---

भवन्तं सेवितुम्॥ **भाग्यास्तमयमित्यादि**। तस्या मालविकायास्तिरस्करिणीं तिरोधानमक्ष्णोर्नेत्रयोर्भाग्यास्तमयमिव भाग्यस्य भागधेयस्यास्तमयमिव नाशमिव। हृदयस्य मनसो महोत्सवस्यावसानमन्तमिव। धृतेः प्रीतेर्द्वारपिधानमिव द्वारस्य प्रवेशमार्गस्य पिधानं तिरोधानमिव। मन्ये संभावयामि। अत्रार्तेर्गम्यमानत्वाद्विधुतं नाम संध्यङ्गमुक्तं भवति॥ दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि॥ **पत्रच्छायेत्यादि**। स्पष्टोऽर्थः॥ अविध अविध, अस्माकं पुनर्भोजनवेलोप-

पाठा०-१ अद्य. २ उवणीअमाणं.

**विदूषकः**—अविहा अविहा, बम्हणस्स[1] भोअणवेला संवुत्ता। अत्तहोदो वि उइदवेलादिक्कमे चिइच्छआ दोसं उदाहरंति। (हरदत्तं विलोक्य) हरदत्त! किं दाणिं भणसि?। [अविध अविध, ब्राह्मणस्य पुनर्भोजनवेलोपस्थिता। अत्रभवत उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति। हरदत्त! किमिदानीं भणसि?।]

**हरदत्तः**—नास्ति मद्वचनस्यान्यस्यावकाशोऽत्र।

**राजा**—तेन हि त्वदीयमुपदेशं श्वो वयं द्रक्ष्यामः। विश्राम्यतु भवान्।

**हरदत्तः**—यदाज्ञापयति देवः। (इति निष्क्रान्तः)

**देवी**—णिव्वट्टेदु अज्जउत्तो मज्जणविहिं। [निर्वर्तयत्वार्यपुत्रो मज्जनविधिम्।]

**विदूषकः**—भोदि! विसेसेण पाणभोअणं तुवरावेहि। [भवति! विशेषेण पानभोजनं त्वरय।]

**परिव्राजिका**—(उत्थाय) स्वस्ति भवते। (इति सपरिजनया देव्या सह निष्क्रान्ता)

**विदूषकः**—भो वअस्स! ण केवलं रूवे, सिप्पे वि अद्दुदीआ मालविआ। [भो वयस्य! न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका।]

**राजा**—वयस्य!

> **अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता।**
> **परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः॥ १३॥**

किं बहुना, सखे! चिन्तयितव्योऽस्मि।

**विदूषकः**—भवदा वि अहं। दिढं विपणिकंदू विअ मे हिअअब्भंतरं दज्झइ। [भवताप्यहम्। दृढं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते।]

---

स्थिता। अत्रभवत उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति। हरदत्त! किमिदानीं भणसि?॥ निर्वर्तयत्वार्यपुत्रो मज्जनविधिम्॥ भवति! विशेषेण पानभोजनं त्वरय॥ भो वयस्य! न केवलं रूपे, शिल्पेऽप्यद्वितीया मालविका॥ **अव्याजसुन्दरीमित्यादि**। ललितेन सुभगेन विज्ञानेन संगीतकलापरिज्ञानेन॥ भवताप्यहम्। दृढं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते। विपणिकन्दुर्नाम पण्यवीथिकायां

---

**पाठा०**—१ बम्हाणं उण.

---

**टिप्प०**—1 उवट्ठिदा. 2 विरमतु. 3 सूणापरिसरचरो विअग्गिद्धो.

राजा—एवमेव भवान्सुहृदर्थेऽपि त्वरताम् ।

विदूषकः—गहीदक्खणोम्हि । किंतु मेहावलीणिरुद्धा जोण्ह विअ पराहीणदंसणा तत्तहोदी मालविआ । भवं वि सूणोपरिचरे विहंगमो विअ आमिसलोलुओ भीरुओ अ । ता अणादुरो भविअ कज्जसिद्धिं पत्थअंतो मे रोअसि । [ गृहीतक्षणोऽस्मि । किं तु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका । भवानपि सूनापरिसरचर इव गृध्र आमिषलोलुपो भीरुकश्च । तस्मादनातुरो भूत्वा कार्यसिद्धिं प्रार्थयमानो मे रोचसे । ]

राजा—कथमनातुरो भविष्यामि ? ।

सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः ।

---

व्रीहिपिष्टपचनपात्रम् । 'कन्दुर्ना स्वेदनी स्त्रियाम्' इत्यमरः ॥ **एवमेवेत्यादि** । एवमेवेत्थमेव । यथा भवान्भोजनरूपे स्वकार्ये त्वरते, तथा सुहृदर्थे मदर्थे मालविका पुनर्दर्शने त्वरताम् । अत्र दृष्टनष्टस्य बीजस्यानुसर्पणात्परिसर्प[1] इति संध्यङ्गमुक्तं भवति ॥ गृहीतदक्षिणोऽस्मि । किंतु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका । भवानपि सूनापरिसरचर इव गृध्र आमिषलोलुपो भीरुकश्च । अत्यन्तातुर इव कार्यसिद्धिं प्रार्थयमानो मे रोचसे । अत्र सान्त्वनस्य गम्यमानत्वात्पर्युपासनं[2] नाम संध्यङ्गमुक्तं भवति ॥ **सर्वान्तःपुरेत्यादि** । यत्स्नेहस्य प्रेम्ण एकायनीभूता । एकं केवलमयनं स्थानम्, आश्रय इत्यर्थः । तद्भूता । अत्राङ्के मालविकाया निष्क्रमणेन कथाविच्छेदे सति सर्वान्तःपुरेत्यादिना गम्यमानो राज्ञोऽभिलाषातिशय उत्तराङ्ककथाहेतुत्वाद्बिन्दुरित्यनुसंधेयम् ॥

इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये
मालविकाग्निमित्रव्याख्याने द्वितीयोऽङ्कः ॥

---

टिप्प०—1 तल्लक्षणं चोक्तं **दशरूपके** ( १।३२ )–'दृष्टनष्टानुसर्पणम्, परिसर्पः' इति । 2 तल्लक्षणं चोक्तम् ( द. रू. १।३४ )–'पर्युपास्तिरनुनयः' इति ।

# तृतीयाङ्कस्य कथावस्तु

अत्र मधुकरिका-समाहितिकासंवादात्मकेन प्रवेशकेन—जातविज्ञान-संघर्षयोराचार्यगणदास-हरदत्तयोः समानागमित्वेऽपि शिष्याया मालविकाया गुणविशेषेण गणदासस्योपदेशः प्रशंसितः; अपरं चाव्याजसौन्दर्य—ललितविज्ञानसमुल्लसितायां मालविकायां सानुरागो राजा राजन्यपि च मालविका संजातानुरागाऽव्येषु दिवसेष्वनुभूतमुक्तेव मालतीम्लाना लक्ष्यते इति कौलीनं प्रायः सर्वत्र राजकुले प्रचरितचरमित्यावेदितं भवति। ततश्च विदूषको राज्ञोऽभिलषितं मालविकायाः सख्यै बकुलावलिकायै निवेद्यात्रविषये तस्याः सहायं संप्रार्थितवान्। तदनुरागाभिज्ञा सापि—'देव्याधिकतरं रक्ष्यमाणा मालविका नागरक्षित इव निधिर्न सुखं समासादयितव्या, तथापि घटयिष्यामि' इति सानुनयं नृपाय प्रतिश्रुतवती। एतदन्तरे प्रमदवनपालिका चिरायमाणाशोकस्य पादताडनरूपं दोहदनिमित्तं देव्यै न्यवेदयत्। दोलापरिभ्रष्टयाऽत एव सरुजचरणया देव्या मालविकाऽत्र कार्यक्षमेति तपनीयाशोकस्य दोहदनिर्वर्तने नियुक्ता—अपि चेत्पञ्चरात्राभ्यन्तरे कुसुमोद्गमोऽस्य भविष्यति ततोऽहमभिलाषपूरयितृकं पारितोषिकं ते दापयिष्यामीति तस्यै प्रतिज्ञातं च। एतदनन्तरं मालविकानुरक्तो विदूषकेणानुगतश्च कामयमानावस्थ इरावत्या दोलाधिरोहणे आमन्त्रितश्च राजा प्रमदवनं प्रविशति स्म। यदृच्छया बकुलावलिकया समेता मालविकाऽपि तपनीयाशोकस्य दोहदं निर्वर्तयितुं प्रमदवनमुपस्थिता। अमुं प्रस्तावमुपलभ्य च बकुलावलिकया मालविकाया राजन्यनुरागः सुदूरमारोपितः। लतानिगूढः सविदूषको राजा निखिलमेतत्समालोक्य स्वात्मानं यावद्दर्शयति तावदेव दोलाधिरोहणे कृतसंकेता इरावत्यपि तत्रैव सुनिभृतं समालोक्यैतदन्तरे एव स्वात्मानमदर्शयत्। तेन सवयस्यो राजा संभ्रान्तोऽभवत्, सा तथाविधं राजानं तत्र च वीक्ष्य निरभर्त्सयत्। किंच राज्ञा मुहुर्मुहुरनुनीयमानाऽपीरावती सरोषा चेट्या समं सद्यः समपचक्राम।

# तृतीयोऽङ्कः ।

( ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका )

**समाहितिका**—आणत्तम्हि भअवदीए–समाहिदिए ! देवस्स उवाअणत्थं वीअऊरअं गेण्हिअ आअच्छ त्ति । ता जाव पमदवणपालिअं महुअरिअं अण्णेसामि । ( परिक्रम्यावलोक्य ) एसा तवणीआसोअं ओलोअंती महुअरिआ चिट्ठदि । ता जाव णं उवसप्पामि [ आज्ञप्तास्मि भगवत्या–समाहितिके ! देवस्योपवनस्थं बीजपूरकं गृहीत्वा गच्छेति तद्यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति । तद्यावदेनामुपसर्पामि ।

( ततः प्रविशत्युद्यानपालिका )

**समाहितिका**—( उपसृत्य ) महुअरिए ! अवि सुहो दे उज्जाणवावारो ? । [ मधुकरिके ! अपि सुखस्त उद्यानव्यापारः ? । ]

**मधुकरिका**—अम्हो समाहिदिआ । सहि ! सागदं दे । [ अहो समाहितिका । सखि ! स्वागतं ते । ]

**समाहितिका**—हला ! भगवदी आणवेदि अरित्तपाणिणा अम्हारिसजणेण तत्तहोदी देवी देक्खिदव्वा, ता वीअपूरएण सुस्सूसिदुं इच्छामित्ति। [ सखि ! भगवत्याज्ञापयति ! अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या, तद्बीजपूरकेण शुश्रूषितुमिच्छामीति । ]

**मधुकरिका**—णं संणिहिदं बीजपूरअं। कहेहि दाव अण्णोण्णसंघरिसिदाणं णट्टाअरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो त्ति ? । [ ननु संनिहितं बीजपूरकम् । कथय तावदन्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसित इति । ]

**समाहितिका**—दुवे वि किल आअमिणा पओअणिउणा अ । किंतु सिस्साए मालविआए गुणविसेसेण गणदासस्स उवदेसो पसंसिदो ।

---

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादिना** ॥ आज्ञप्तास्मि भगवत्या–समाहितिके ! देवस्योपवनस्थं बीजपूरकं गृहीत्वागच्छेति । तद्यावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति । तद्यावदेनामुपसर्पामि । मधुकरिके ! अपि सुखस्त उद्यानव्यापारः ? अहो समाहितिका । सखि ! स्वागतं ते ॥ सखि ! भगवत्याज्ञापयति । अरिक्तपाणिनास्मादृशजनेन तत्रभवती देवी द्रष्टव्या । तस्माद्बीजपूरकेण शुश्रूषितुमिच्छामीति ॥ ननु संनिहितं बीजपूरकम् । कथय तावद

[ द्वावपि किलागमिनौ प्रयोगनिपुणौ च । किंतु शिष्याया मालविकाया गुणविशेषेण गणदासस्योपदेशः प्रशंसितः । ]

**मधुकरिका**—अह मालविआगदं कौलीणं कीरिसं सुणीअदि ? । [ अथ मालविकागतं कौलीनं कीदृशं श्रूयते ? ]



**समाहितिका**—बाढं खु तस्सिं साहिलासो भट्टा । किंतु केवलं देवीए धारिणीए चित्तं रक्खंतो अत्तणो पहुत्तणं दंसेदि । मालविआ वि इमेसु दिअसेसु अणुहूदमुत्ता विअ मालदीमाला मिलाअमाणा लक्खीअदि । अदो वरं ण जाणे, विसज्जेहि मं । [ बाढं खलु तस्यां साभिलाषो भर्ता । किंतु केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते । अतः परं न जाने, विसृज माम् । ]

**मधुकरिका**—एदं साहावलंबिदं बीअपूरअं गेण्ह । [ एतच्छाखावलम्बितं बीजपूरकं गृहाण । ]

**समाहितिका**—तह (इति नाट्येन बीजपूरकं गृहीत्वा) हला ! तुमं वि अदो पेसलदरं साहुजणसुस्सूसाए फलं पावेहि । [ तथा । सखि ! त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि । ] ( इति प्रस्थिता )

**मधुकरिका**—हला ! समं जेव्व गच्छम्ह । अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि । [ सखि ! सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि । ]

**समाहितिका**—जुज्जइ, अहिआरो खु तुह । [ युज्यते, अधिकारः खलु तव । ]

( इति निष्क्रान्ते )

## इति प्रवेशकः ।

---

न्योन्यसंघर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ॥ द्वावपि किलागमिनौ प्रयोगनिपुणौ च, किंतु शिष्याया मालविकायां गुणविशेषेण गणदासस्योपदेशः प्रशंसितः ॥ अथ मालविकागतं कौलीनं लोकवार्ता कीदृशं श्रूयते ?॥ बाढं किल तस्यां साभिलाषो भर्ता किंतु केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं दर्शयति। मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते । अतःपरं न जाने । विसृज माम् ॥ एतच्छाखावलम्बितं बीजपूरकं गृहाण ॥ तथा । सखि ! त्वमप्यतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि ॥ सखि ! सममेव गच्छावः । अहमप्यस्य

पाठा०–१ अणुभविस्ससि.

( ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च )

**राजा**—( आत्मानं विलोक्य )

**शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे**
**भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।**
**तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं**
**प्रसक्ते निर्वाणे हृदय ! परितापं व्रजसि किम् ? ॥ १ ॥**

**विदूषकः**—अलं भवदो धीरदं उज्झिअ परिदेविदेण । दिट्ठा खु मए तत्तहोदीए मालविआए पिअसही बउलावलिआ । सुणाविदा अ मह जं भवदा संदिट्ठं । [ अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा खलु मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका । श्राविता च मया यद्भवता संदिष्टम् । ]

**राजा**—ततः किमुक्तवती ? ।

**विदूषकः**—विण्णावेहि भट्टारअं—अणुगहिदम्हि इमिणा णिओएण । किंदु सा तवस्सिणी देवीए अहिअदरं रक्खंतीए णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा । तह वि घेटइस्सं[2] त्ति । [ विज्ञापय भट्टारकम्—अनुगृहीतास्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि घटयिष्यामीति । ]

**राजा**—भगवन् संकल्पयोने ! प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेश्य किं तथा प्रहरसि यथा जनोऽयं न कालान्तरक्षमो भवति ? । ( सविस्मयम् )

---

चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि ॥ युज्यते । अधिकारः खलु तव ॥ इति प्रवेशकः ॥ **ततः प्रविशतीत्यादि** । कामयमानावस्थः । कामयमानानां कामिनामवस्थेवावस्था दशा यस्य स तथोक्तः ॥ **शरीरमित्यादि** । दयितालिङ्गनसुखे प्रियाभिष्वङ्गसौख्येऽसत्यविद्यमाने सति शरीरं वपुः क्षामं स्यात्कृशं भवेत् । क्षणमपि क्षणमात्रमपि सा मालविका न दृश्यत इति न लक्ष्यत इति चक्षुः सास्रं सबाष्पं भवेत्स्यात् । हे हृदय चित्त ! सारङ्गाक्ष्या हरिणनेत्रया तया मालविकया कदाचिज्जातुचिद्विरहितं वियुक्तं नासि न भवसि । अतस्तस्मात्कारणान्निर्वाणे सुखे प्रसक्ते प्रस्तुते सति किं किमर्थं परितापं संतापं व्रजसि प्राप्नोषि ? ॥ अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा मया तत्रभवत्या मालविकायाः प्रियसखी बकुलावलिका । श्राविता चार्थं यो भवता संदिष्टः ॥ विज्ञापय भट्टारकम् । अनुगृहीतास्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याधिकं रक्षन्त्या नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि यतिष्ये । अत्र तपस्विनीति करुणापात्रमुच्यते । 'तपस्वी करुणापात्रम्' इति हलायुधः । अत्र प्राप्तिसंभावनया प्राप्त्याशा नाम तृती-

---

**पाठा०-१ वहसि. २ जइस्सं(=यतिष्ये)-टीका०.**

क्व रुजा हृदयप्रमाथिनी,
क्व च ते विश्वसनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते,
तदिदं मन्मथ ! दृश्यते त्वयि ॥ २ ॥

विदूषकः—णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवंक्खेओत्ति । ता पंज्जवत्थावेदु भवं अत्ताणं । [ ननु भणामि तस्मिन्साधनीये कार्ये कृतो मयोपायोपक्षेप इति । तत्पर्यवस्थापयतु भवानात्मानम् ।]

राजा—अथेमं दिवसशेषमुचितव्यापारंविमुखेन चेतसा क्व नु खलु यापयामि ? ।

विदूषकः—णं अज्ज एव्व पंढमं वसंदावदारसूअआणि रत्तकुरवआणि उवाअणं पेसिअ णंववसंतावदारव्ववदेसेण इरावदीए णिउणिआमुहेण पत्थिदो भवं 'इच्छामि अज्जउत्तेण सह दोलाहिरोहणं अणुहविदुं'ति । भवदा वि से पडिण्णादं । ता पमदवणं एव्व गच्छम्ह । [ नन्वद्यैव प्रथमं वसंतावतारसूचकानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान् 'इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुम्' इति । भवताप्यस्यै प्रतिज्ञातम्, तत्प्रमदवनमेव गच्छावः ।

राजा—न क्षममिदम् ।

विदूषकः—कहं विअ ? । [ कथमिव ? । ]

राजा—वयस्य ! निसर्गनिपुणाः स्त्रियः । कथं मामन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति ? । अतः पश्यामि

---

यावस्था सूचिता । अनया प्राप्त्याशया बिन्दोः समन्वयाद्गर्भसंधिरिति मन्तव्यम् ॥ **क्व रुजेत्यादि** । स्पष्टोऽर्थः ॥ ननु भणामि तस्मिन्साधनीये कार्ये कृतो मयोपायोपक्षेपः । तत्पर्यवस्थापयतु भवानात्मानम् । अत्र 'कृत उपक्षेपः' इत्यनेन कपटोपायकल्पनाया गम्यमानत्वेनाभूताहरणं नाम संध्यङ्गमुक्तं भवति ॥ अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेन प्रार्थितो भवान् 'इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुम्' इति । भवताप्यस्यै प्रतिज्ञातम्, तत्प्रमदवनमेव गच्छावः ॥ कथमिव ? ॥

---

**पाठा०**—१ उवक्खेवो त्ति. २ व्यापारपराङ्मुखेन—**टीका०**. ३ पुढमं; पढमावदारसुहआणि—**टीका०**. ४ णववसंदूसवावदेसेण—**टीका०**.

---

टिप्प०—1 अत्र भावसाम्यार्थकं वाक्यं विक्रमोर्वशीये ( १।३२ )—'हला ! पज्जवत्थावेहि अत्ताणं' इति ।

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ ३ ॥

**विदूषकः**—णारिहदि भवं अंतेउरट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुं । [ नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् । ]

**राजा**—( विचिन्त्य ) तेन हि प्रमदवनमार्गमादेशय ।

**विदूषकः**—इदो इदो भवं । [ इत इतो भवान् । ]

( उभौ परिक्रामतः )

**विदूषकः**—णं एदं पमदवणं पवणबलचलाहिं पल्लवंगुलीहिं तुवरेदि विअ भवंतं पवेसिदुं । [ नन्वेतत्प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् । ]

**राजा**—( स्पर्शं रूपयित्वा ) अभिजातः[1] खलु वसन्तः । सखे ! पश्य

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

**विदूषकः**—पविस णिव्वुदिलाहाअ । [ प्रविश निर्वृतिलाभाय । ]

( उभौ प्रविशतः )

**विदूषकः**—अवधाणेण दिट्ठिं देहि । एदं खु भवंतं विअ विलोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावअत्तिअं वसंतकुसु-

---

**उचित इति** । प्रणय इरावत्याः प्रार्थना विहन्तुं प्रतिषेद्धुमुचितोऽर्हो वरं मनाक्प्रियम् । अयं पक्षः किंचित्साधुरित्यर्थः । हि यस्मात्कारणात्खण्डनहेतव ईर्ष्याकोपकारणानि बहवोऽनेके दृष्टा मया लक्षिताः । खण्डनहेतुदर्शनेऽप्युपचारविशेषैः प्रलोभ्यतामित्यत आह—**उपचारेति** । भावशून्यः प्रेमरहितं उपचारविधिरिष्टाचरणं पूर्वाभ्यधिकोऽपि पूर्वस्मादुपचारविधेरतिशयितो मनस्विनीनां तु प्रशस्तमनसां पुनः, विवेकवतीनामित्यर्थः । उपचारविधिर्न भवति, किंत्वपचारविधिरित्यर्थः । अत्र नञर्थस्तद्विरोधः ॥ नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् ॥ इत इतो भवान् ॥ नन्वेतत्प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् ॥ **उन्मत्तानामित्यादि** । स्पष्टोऽर्थः ॥ प्रविश निर्वृतिलाभाय ॥ अवधानेन

---

टिप्प०-1 अत्र भर्तृहरिपद्यस्य विमर्शनमर्हति–'प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिर्निरुत्सेको लक्ष्म्यामभिभवगन्धाः परकथाः । प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥' इति ।

मणेवत्थं गहिदं । [अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव विलोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम् ]

**राजा**—ननु विस्मयादवलोकयामि ।

रक्ताशोकरुचा विशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रिया च तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ ५ ॥

(उभौ नाट्येनोद्यानशोभां निर्वर्णयतः)

(ततः प्रविशति पर्युत्सुका मालविका)

**मालविका**—अविण्णादहिअअं भट्टारअं अहिलसंदी अत्तणो वि दाव लज्जेमि । कुदो विहवो सिणिद्धस्स सहीजणस्स इमं वुत्तंतं आचक्खिदुं ? । ण जाणे अप्पडिआरगरुअं वेअणं केत्तिअं कालं मअणो मं णइस्सदित्ति । (इति कतिचित्पदानि गत्वा ।) आ, कहिं खु पत्थिदम्हि ? । (इति स्मृतिमभिनीय) आदिट्ठम्हि देवीए–'मालविए ! गोदमचापलादो दोलापरिब्भट्ठाए सरुजौ मह चलणौ । तुमं दाव गदुअ तवणीआसोअस्स दोहलं णिवट्टेहि त्ति' । जइ सो पञ्चरत्तब्भंतरे कुसुमं दंसेदि तदो अहं अहिलासपूरइत्तअं पसादं दावइस्सं त्ति । ता जाव णिओअभूमिं पढमं गदा होमि, दाव अणुपदं मह चलणालंकारहत्थाए वउलावलिआए आअंदव्वं, ता परिदेवइस्सं ताव वीसद्धं मुहुत्तअं । [अविज्ञातहृदयं

---

दृष्टिं देहि । एतत्खलु भवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं वसन्तकुसुमनेपथ्यं गृहीतम् ॥ **रक्ताशोकेत्यादि** । बिम्बाधरे बिम्बमिवाधरस्तस्मिन् । 'विशेषणं विशेष्येण बहुलम्' (पा. २।१।५७) इति विशेषणसमासः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा. २।१।५६) इत्युपमितसमासस्तु कविभिरत्र ग्राम्ये प्रायेण नाङ्गीकृतः । अलक्तको लाक्षा । रक्ताशोकरुचा रक्ताशोककुसुमस्य रुचा कान्त्या विशेषितः गुणः । विशेषितोऽतिशयितस्तिरस्कृतो गुणो रागो यस्य स तथोक्तः । श्यामावदातारुणम् । श्यामं च तदवदातमरुणं च तत्तथोक्तम् । 'वर्णो वर्णेन' (पा. २।१।६९) इति कर्मधारयः । कुरबकं कुरबकपुष्पं प्रत्याख्यातविशेषकम् । प्रत्याख्यातं तिरस्कृतं विशेषकं पत्रभङ्गो येन तत्तथोक्तम् । लग्नद्विरेफाञ्जनैर्लग्नः सक्तो द्विरेफो भ्रमर एवाञ्जनं येषु तैस्तिलकैस्तिलककुसुमैस्तिलकक्रियापि तिलकस्य ललाटिकायाः क्रियाक्रान्तोल्लङ्घिता, परिभूतेत्यर्थः । माधवी मधुसंबन्धिनी श्रीर्लक्ष्मीः शोभेत्यर्थः । योषितां स्त्रीणां मुखप्रसाधनविधौ मुखालंकारकरणे सावज्ञेवावमानेन सहितेव, अवमाननां कृतवतीवेत्यर्थः ॥ अवि-

---

पाठा०–१ लीनद्विरेफाञ्जनैः.

भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जे । कुतो विभवः स्निग्धस्य सखीजनस्ये वृत्तान्तमाख्यातुम् ? । न जानेऽप्रतिकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । आ, कुत्र खलु प्रस्थितास्मि ? । आदिष्टास्मि देव्या—'मालविके गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मम चरणौ । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तय'इति । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति, ततोऽहमभिलाषपूरयितृकं प्रसादं दापयिष्यामीति । तद्यावन्नियोगभूमिं प्रथमं गता भवामि, तावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयागन्तव्यम्, तत्परिदेवयिष्ये तावद्विस्रब्धं मुहूर्तकम् । ] ( इति परिक्रामति )

**विदूषकः**—( दृष्ट्वा ) ही ही, वअस्स ! एदं खु सीहुपाणुव्वेजिदस्स मच्छंडिआ उवणदा । [ आश्चर्यमाश्चर्यम्, वयस्य ! एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता[1] । ]

**राजा**—अये, किमेतत् ? ।

**विदूषकः**—एसा णादिपरिक्खिदवेसा ऊसुअवअणा एआइणी मालविआ अदूरे वट्टदि । [ एषा नातिपरिष्कृतवेषोत्सुकवदनैकाकिनी मालविकाऽदूरे वर्तते ।

**राजा**—( सहर्षम् ) कथं मालविका ।

**विदूषकः**—अह इं । [ अथ किम् । ]

**राजा**—शक्यमिदानीं जीवितमवलम्बयितुम् ।

---

ज्ञातहृदयं भर्तारमभिलषन्त्यात्मनोऽपि तावल्लज्जे । कुतो विभवः स्निग्धस्य सखीजनस्येमं वृत्तान्तमाख्यातुम्? । न जानेऽप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । आ कुत्र खलु प्रस्थितास्मि? । 'आ' स्मृतौ । आदिष्टास्मि देव्या—'मालविके ! गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मम चरणौ । त्वं तावद्गत्वा तपनीयाशोकस्य दोहदं निर्वर्तय' इति । यद्यसौ पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततोऽहमभिलाषपूरयितृकं प्रसादं दापयिष्यामीति । तद्यावन्नियोगभूमिं प्रथमं गता भवामि । 'यावत्पुरानिपातयोर्लट्' इति ( पा. ३।३।४ ) भविष्यदर्थे लट् । तावदनुपदं मम चरणालंकारहस्तया बकुलावलिकयागन्तव्यम् । तत्परिदेवयिष्ये तावद्विस्रब्धं मुहूर्तकम् ॥ आश्चर्यमाश्चर्यम्, वयस्य ! एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता । मत्स्यण्डिकानाम शर्कराविशेषः ॥ एषा नातिपरिष्कृतवेषोत्सुकवदनैकाकिनी मालविकाऽदूरे वर्तते ॥ अथ किम् ॥

---

टिप्प०-1 मदात्ययचिकित्सायां मदपीडाशामको मत्स्यण्डिकाप्रयोग उक्तः—'मदयति न मद्यं जातुचित् पीतमद्यं पिबति घृतसमेतां शर्करामेव सद्यः' इति ।

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम् ।
तरुवृतां पथिकस्य जलार्थिनः
सरितमारसितादिव सारसात् ॥ ६ ॥

अथ क तत्रभवती ? ।

**विदूषकः**—एसा तरुराइमज्झादो णिक्कंता इदो ज्जेव्व परिवट्टंती दीसइ । [ एषा तरुराजिमध्यान्निष्क्रान्तेत एव परिवर्तमाना दृश्यते । ]

**राजा**—( विलोक्य, सहर्षम् ) वयस्य ! पश्याम्येनाम् ।

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

सखे ! पूर्वस्मादतिमनोहरावस्थान्तरमुपारूढा तत्रभवती । तथा हि,—

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥

**विदूषकः**—एसा वि भवं विअ मअणव्वाहिणा परिमिट्ठा भविस्सदि । [ एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति । ]

**राजा**—सौहार्दमेवं पश्यति ।

**मालविका**—अअं सो ललिदसुउमालदोहलापेक्खी अगिहीद-कुसुमणेवत्थो उक्कंठिदाए मह अणुकरेदि असोओ । जाव एदस्स पच्छाअसीदले सिलापट्टए णिसण्णा अत्ताणं विणोदेमि । [ अयं स ललितसुकुमारदोहदापेक्षी अनुगृहीतकुसुमनेपथ्य उत्कण्ठिताया ममाऽनुकरोत्यशोकः । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि । ]

**विदूषकः**—सुदं भवदा उक्कंठिदम्हि त्ति तत्तहोदी मंतेदि । [ श्रुतं भवता उत्कण्ठितास्मीति तत्रभवती मन्त्रयते । ]

**राजा**—नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः

---

**त्वदुपलभ्येत्यादि** । स्पष्टोऽर्थः । अत्र संचिन्त्यमानार्थस्य प्राप्तेः क्रमो नाम संध्यङ्गमुक्तं भवति ॥ एषा तरुराजिमध्यान्निष्क्रान्तेत एव परिवर्तमाना दृश्यते ॥ **विपुलमिति** । स्पष्टोऽर्थः ॥ **शरकाण्डेति** । स्पष्टोऽर्थः ॥ एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति ॥ अयं स ललितसुकुमारदोहदापेक्ष्यगृहीत-कुसुमनेपथ्य उत्कण्ठिताया ममाऽनुकरोत्यशोकः । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णात्मानं विनोदयामि ॥ श्रुतं भवता उत्कण्ठितास्मीति तत्र-

---

**पाठा०—१ मुद्रसितादिव.**

वोढा कुरबकरजसां किसलयपुटभेदशीकरानुगतः ।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः ॥ ९ ॥

( मालविकोपविष्टा )

**राजा**—सखे ! इतस्तावदावां लतान्तरितौ भवावः ।

**विदूषकः**—इरावदिं विअ अदूरे पेक्खामि । [इरावतीमिवादूरे प्रेक्षे । ]

**राजा**—नहि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः । ( इति विलोकयन्स्थितः )

**मालविका**—हिअअ ! णिरवलंबणादो अदिभूमिलंघिणो दे मणोरहादो विरम; किं मं आआसिअ ? । [ हृदय ! निरवलम्बनादतिभूमिलङ्घिनस्ते मनोरथाद्विरम; किं मामायास्य ? । ]

( विदूषको राजानं वीक्षते )

**राजा**—प्रिये ! पश्य वामत्वं स्नेहस्य ।

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वाववोधैकफलो न तर्कः ।
तथापि रम्भोरु ! करोमि लक्ष्य-
मात्मानमेषां परिदेवितानाम् ॥ १० ॥

**विदूषकः**—संपदं भवदो णिस्संसअं भविस्सदि । एसा अप्पिदमअणसंदेसा विवित्ते णं बउलावलिआ उवट्ठिदा । [ सांप्रतं भवतो निःसंशयं भविष्यति । एषार्पितमदनसंदेशा विविक्ते ननु बकुलावलिकोपस्थिता । ]

**राजा**—अपि स्मरेदसावस्मदभ्यर्थनाम् ? ।

**विदूषकः**—किं दाणिं एसा दासीए दुहिता तुह गरुअं संदेसं विसुमरेदि ? । अहं दाव ण विसुमरेमि । [ किमिदानीमेषा दास्या दुहिता तव गुरुकं संदेशं विस्मरति ? । अहं तावन्न विस्मरामि । ]

( प्रविश्य चरणालंकारहस्ता बकुलावलिका )

**बकुलावलिका**—अवि सुहं सहीए ? । [ अपि सुखं सख्याः ? । ]

---

भवती मन्त्रयते ॥ **वोढेत्यादि** । स्पष्टोऽर्थः ॥ इरावतीमिवादूरे प्रेक्षे ॥ हृदय निरवलम्बनादतिभूमिलङ्घिनो मनोरथाद्विरम । किं मामायास्य ॥ **औत्सुक्येत्यादि** । स्पष्टोऽर्थः ॥ सांप्रतं भवतो निःसंशयं भविष्यति । एषाऽर्पितमदनसंदेश मदनसंदेशा विविक्ते ननु बकुलावलिकोपस्थिता ॥ किमिदानीमेषा दास्या दुहित तव गुरुकं संदेशं विस्मरति ? । अहं तावन्न विस्मरामि ॥ अपि सुखं सख्याः ? ।

पाठा०—१ रसो.

**मालविका**—अम्हो, बउलावलिआ उवट्ठिदा । सहि ! साअदं दे । उवविस । [ अहो, बकुलावलिकोपस्थिता । सखि ! स्वागतं ते । उपविश । ]

**बकुलावलिका**—( उपविश्य ) हला ! तुमं दाणिं जोग्गदाए णिउत्ता । ता एक्कं दे चलणं उवणेहि जाव सालत्तअं सणेउरं अ करेमि । [ सखि ! त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं च करोमि । ]

**मालविका**—( आत्मगतम् ) हिअअ ! अलं सुहिददाए, उवट्ठिदो अअं विहवो । कहं दाणिं अत्ताणं मोचेअं ? । अहवा एदं एव्व मे मित्तमंडणं भविस्सदि । [ हृदय ! अलं सुखितया, उपस्थितोऽयं विभवः । कथं वेदानीमात्मानं मोचयेयम् ? । अथवा एतदेव मे मृत्युमण्डनं भविष्यति । ]

**बकुलावलिका**—किं विआरेसि ? । ऊसुआ खु इमस्स तवणी-आसोअस्स कुसुमोग्गमे[1] देवी । [ किं विचारयसि ? । उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी । ]

**राजा**—कथमशोकदोहदनिमित्तोऽयमारम्भः ? ।

**विदूषकः**—किंणु खु जाणासि तुमं-मह कालणादो देवी मं अंतेउरणेवच्छेण योजइस्सदि त्ति ? । [ किंनु खलु जानासि त्वम्—मम कारणाद्देवी मामन्तःपुरनेपथ्येन योजयिष्यतीति ? । ]

**मालविका**—हला ! मरिसेहि दाव णं । [ सखि ! मर्षय तावदेनम् । ] ( इति पादमुपहरति )

**बकुलावलिका**—अइ ! सरीरअं सि मे । [ अयि ! शरीरम सि मे । ]

( इति नाट्येन चरणसंस्कारमारभते )

---

अहो बकुलावलिकोपस्थिता । सखि ! स्वागतं ते । उपविश ॥ सखि ! त्वमिदानीं योग्यतया नियुक्ता । तस्मादेकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं च करोमि ॥ हृदय ! अलं सुखितया, उपस्थितोऽयं विभवः । कथं वेदानीमात्मानं मोचयेयम् ? । अथवा एतदेव मे मृत्युमण्डनं भविष्यति ॥ किं विचारयसि ? । उत्सुका खल्वस्य तपनीयाशोकस्य मुकुलोद्गमे देवी ॥ किंनु खलु जानासि त्वम्—मम कारणाद्देवी मामन्तःपुरनेपथ्येन योजयिष्यतीति ? ॥ सखि ! मर्षय तावदेनम् ॥ अयि !

---

पाठा०–१ मुउलोग्गमे–टीका०.

राजा—

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य ! रागलेखाम् ।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ ११ ॥

विदूषकः—चलणाणुरूवो तत्तहोदीए अहिआरो उवक्खित्तो [ चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः । ]

राजा—सम्यगाह भवान् ।

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥ १२ ॥

विदूषकः—पहरिस्सदि तत्तहोदी तुमं अवरद्धं । [ प्रहरिष्यति तत्रभवती त्वामपराद्धम् । ]

राजा—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

( ततः प्रविशति युक्तमदा इरावती चेटी च )

इरावती—हञ्जे णिउणिए ! सुणामि बहुसो मदो किल इत्थिआजणस्स विसेसमंडणं त्ति । अवि सच्चो एसो लोअवाओ ? । [ चेटि निपुणिके ! शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्य एष लोकवादः । ]

निपुणिका—पढमं लोअवाओ एव्व, अज्ज सच्चो संवुत्तो । [ प्रथमं लोकवाद एव, अद्य सत्यः संवृत्तः । ]

इरावती—अलं मयि सिणेहेण । कहेहि कुदो दाणिं ओगमिदव्वं दोलाघरं पढमं गदो भट्टा ण वेत्ति । [ अलं मयि स्नेहेन । कथय कुत इदानीमवगन्तव्यं दोलागृहं प्रथमं गतो भर्ता न वेति । ]

---

शरीरमसि मे ॥ **चरणान्तेत्यादि** । स्पष्टोऽर्थः ॥ चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः ॥ **नवकिसलयेत्यादि** । स्पष्टोऽर्थः ॥ प्रहरिष्यति तत्रभवती त्वामपराद्धम् ॥ चेटि निपुणिके! शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्य एष लोकवादः ? ॥ प्रथमं लोकवाद एवाद्य सत्यः संवृत्तः ॥ अलं मयि स्नेहेन । कथय कुत इदानीमवगन्तव्यं दोलागृहं प्रथमं गतो भर्ता न

पाठा०—१ प्रणिहित.

**निपुणिका**—भट्टिणीए अखंडिदादो पणआदो । [भट्टिन्या अखण्डितात्प्रणयात् ।]

**इरावती**—अलं सेवाए; मज्झत्थदं परिगहिअ भणाहि । [अलं सेवया; मध्यस्थतां परिगृह्य भण ।]

**निपुणिका**—वसंतोस्सवुवाअणलोलुवेण अज्जगोदमेण कहिअं तुवरदु भट्टिणी त्ति । [वसन्तोत्सवोपायनलोलुपेनार्यगौतमेन कथितं त्वरतां भट्टिनीति ।]

**इरावती**—(अवस्थासदृशं परिक्रम्य) हञ्जे ! मदेण किलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरेदि । चलणा उण ण मह पसरंदि । [चेटि ! मदेन क्लाम्यमानमात्मानमार्यपुत्रस्य दर्शने हृदयं त्वरयति । चरणौ पुनर्न मम प्रसरतः ।]

**निपुणिका**—णं संपत्त म्ह दोलाघरं । [ननु संप्राप्ते स्वो दोलागृहम् ।]

**इरावती**—णिउणिए ! अज्जउत्तो एत्थ ण दीसदि । [निपुणिके ! आर्यपुत्रोऽत्र न दृश्यते ।]

**निपुणिका**—णं भट्टिणीए ओलोअदु । परिहासणिमित्तं कहिं वि अदिट्टेण भत्तुणा होदव्वं । अम्हे वि पिअंगुलदापरिक्खित्तं असोअ-सिलापट्टअं पविसम्ह । [ननु भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् । आवामपि प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः ।]

**इरावती**—तह । [तथा ।]

**निपुणिका**—(विलोक्य) ओलोअदु भट्टिणी चूदंकुरं विचिणतीणं पिपीलिआहिं दंसिदं । [अवलोकयतु भट्टिनी चूताङ्कुरं विचिन्वत्योः पिपीलिकाभिर्दष्टम् ।]

**इरावती**—कहं विअ एदं ? । [कथमिवेदम् ? ।]

---

वेति ॥ भट्टिन्या अखण्डितात्प्रणयात् ॥ अलं सेवया, मध्यस्थतां परिगृह्य भण ॥ वसन्तोत्सवोपायनलोलुपेनार्यगौतमेन कथितम्—त्वरतां भट्टिनीति ॥ चेटि ! मदेन क्लाम्यमानमात्मानमार्यपुत्रदर्शने हृदयं त्वरयति । चरणौ पुनर्न मम प्रसरतः ॥ ननु संप्राप्ते स्वो दोलागृहम् । निपुणिके ! आर्यपुत्रोऽत्र न दृश्यते ॥ ननु भट्टिन्यवलोकयतु । परिहासनिमित्तं कुत्राप्यदृष्टेन भर्त्रा भवितव्यम् । आवामपि प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः । तथा ॥ अवलोकयतु भट्टिनी चूताङ्कुरं विचिन्वत्योः पिपीलिकाभिर्दष्टम् । भावे क्तः ॥ कथमिवेदम् ॥ एषाऽशोकपादपच्छायायां

**निपुणिका**—एसा असोअपादवच्छाआए मालविआए बउला-वलिआ चलणालंकारं णिव्वट्टेदि । [एषाऽशोकपादपच्छायां मालविकाया बकुलावलिका चरणालंकारं निर्वर्तयति ।]

**इरावती**—(शङ्कां रूपयित्वा) अभूमी इअं मालविआए, कहं एत्थ तक्केसि ? । [अभूमिरियं मालविकायाः, कथमत्र तर्कयसि ?।]

**निपुणिका**—तक्केमि दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहलाहिआरे मालविआ णिवुत्तेत्ति । अण्णहा कहं देवी सअंधारिअं णेउरजुउलं परिअणस्स अब्भणुजाणिस्सदि ? । [तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे मालविका नियुक्तेति । अन्यथा कथं देवी स्वयंधारितं नूपुरयुगुलं परिजनस्याभ्यनुज्ञास्यति ?।]

**इरावती**—महदी खु से संभावणा । [महती खल्वस्याः संभावना।]

**निपुणिका**—किं ण अण्णेसीअदि भट्टा ? । [किं नान्विष्यते भर्ता ?।]

**इरावती**—हला ! ण मे चलणा अण्णदो पवट्टंति । मणो[1] मं विआरेदि । आसंकिदस्स दाव अंतं गमिस्सं । (मालविकां निर्वर्ण्य निरूप्यात्मगतम्) ठाणे खु कादरं मे हिअअं । [सखि ! न मे चरणावन्यतः प्रवर्तेते। मनो मां विकारयति । आशङ्कितस्य तावदन्तं गमिष्यामि । स्थाने खलु कातरं मे हृदयम् ।]

**बकुलावलिका**—(मालविकायै चरणं दर्शयन्ती) अवि रोअदि दे राअरेहाविण्णासो ? । [अपि रोचते ते रागरेखाविन्यासः ?।]

**मालविका**—हला ! अत्तणो चलणं त्ति लज्जेमि णं पसंसिदुं । तेण पसाहणकलाए अहिणीदासि । [सखि ! आत्मनश्चरण इति लज्जे एनं प्रशंसितुम् । तेन प्रसाधनकलायामभिनीतासि ।]

---

मालविकाया बकुलावलिका चरणालंकारं निर्वर्तयति ॥ अभूमिरियं मालविकायाः कथमत्र तर्कयसि ?॥ तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे मालविका नियुक्तेति । अन्यथा कथं देवी स्वयंधारितं नूपुरयुगुलं परिजनस्याभ्यनुज्ञास्यति ?॥ महती खल्वस्याः संभावना॥ किं नान्विष्यते भर्ता॥ सखि! न मे चरणावन्यतः प्रवर्तेते । मदो मां विकारयति । आशङ्कितस्य तावदन्तं गमिष्यामि । स्थाने खलु कातरं मे हृदयम् ॥ अपि रोचते ते रागरेखाविन्यासः ?॥ सखि ! आत्मनश्चरण इति लज्जे एनं प्रशंसितुम् । तेन प्रसाधनकलायामभिनी-

पाठा०–१ मदो-टीका०.

**बकुलावलिका**—एत्थ खु भत्तुणो सीसम्हि । [अत्र खलु भर्तुः शिष्यास्मि ।]

**विदूषकः**—तुवरेहि दाव णं गुरुदक्खिणाए । [त्वरय तावदेनां गुरुदक्षिणायै ।]

**मालविका**—दिट्ठिआ ण गविदासि । [दिष्ट्या न गर्वितासि ।]

**बकुलावलिका**—उवदेसाणुरूवा चलणा लंभिअ अज्ज दाव गविदा भविस्सं । (रागं विलोक्यात्मगतम्) हंत, सिद्धं मे दुत्थं । (प्रकाशम्) सहि ! एक्कस्स दे चलणस्स अवसिदो राअणिक्खेवो । केवलं मुहमारुदो लभइदव्वो । अहवा पवादं एदं ठाणं । [उपदेशानुरूपौ चरणौ लब्ध्वाद्य तावद्गर्विता भविष्यामि । हन्त, सिद्धं मे दूत्यम् । सखि ! एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम् ।]

**राजा**—सखे ! पश्य

> **आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयितुम्[1] ।**
> **प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥ १३ ॥**

**विदूषकः**—कुदो दे अणुसओ ? । एदं भवदा चिरक्कमेण अणुभविदव्वं । [कुतस्तेऽनुशयः ? । एतावद्भवता चिरक्रमेणानुभवितव्यम् ।]

**बकुलावलिका**—सहि ! अरुणसतपत्तं विअ सोहदि दे चलणो । सव्वहा भत्तुणो अंकपरिवट्टिणी होहि । [सखि ! अरुणशतपत्रमिव शोभते ते चरणः । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।]

(इरावती निपुणिकामवेक्षते)

**राजा**—ममेयमाशीः ।

**मालविका**—हला ! मा अवअणीअं [2]मंतेहि । [सखि ! मा अवचनीयं मन्त्रयस्व ।]

---

तासि ॥ अत्र खलु भर्तुः शिष्यास्मि ॥ त्वरय तावदेनां गुरुदक्षिणायै ॥ दिष्ट्या न गर्वितासि ॥ उपदेशानुरूपौ चरणौ लब्ध्वाद्य तावद्गर्विता भविष्यामि । हन्त, सिद्धं मे दूत्यम् । सखि ! एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथवा प्रवातमेतत्स्थानम् । **आर्द्रालक्तकमित्यादि ।** मुखमारुतेन शोषयितुं शुष्कतां नेतुं प्रथमतरो मुख्यतरः प्रतिपन्नः प्राप्तः ॥ कुतस्तेऽनुशयः ? । एतावद्भवता चिरक्तमेणानुभवितव्यम् ॥ सखि ! अरुणशतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ॥ सखि ! मा अवचनीयं मन्त्र-

**पाठा०—१ वीजयितुम्. २ मंतेसि.**

**बकुलावलिका**—मंतइदव्वं एव्व मंतिदं मए । [ मन्त्रयितव्यमे मन्त्रितं मया । ]

**मालविका**—पिआ खु अहं तव । [ प्रिया खल्वहं तव । ]

**बकुलावलिका**—ण केवलं मह । [ न केवलं मम । ]

**मालविका**—कस्स वा अण्णस्स ? । [ कस्य वाऽन्यस्य । ]

**बकुलावलिका**—गुणेसु अहिणिवेसिणो भत्तुणो वि । [ गुणेष्व भिनिवेशिनो भर्तुरपि । ]

**मालविका**—अलीअं मंतेसि । एदं एव्व मयि णत्थि । [ अलीकं मन्त्रयसे । एतदेव मयि नास्ति । ]

**बकुलावलिका**—सच्चं तुयि णत्थि । भत्तुणो किसेसु [1]सुंदर पांडुरेसु दीसइ अंगेसु । [ सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरे दृश्यतेऽङ्गेषु । ]

**निपुणिका**—पढमं भणिदं विअ हदासाए उत्तरं । [ प्रथमं भणित मिव हताशाया उत्तरम् । ]

**बकुलावलिका**—अणुराओ अणुराएण परिक्खिदव्वो त्ति सुअ णवअणं पमाणीकरेहि । [ अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवच प्रमाणीकुरु । ]

**मालविका**—किं अत्तणो छंदेण मंतेसि ? । [ किमात्मनश्छन्देन मन्त्र यसि ? । ]

**बकुलावलिका**—णहि णहि; भत्तुणो खु एदाइं पणअमिदुला अक्खराइं वत्तंतरिदाइं । [ नहि नहि; भर्तुः खल्वेतानि प्रणयमृदुलान्यक्षरा वक्रान्तरितानि । ]

**मालविका**—हला ! देविं चिंतिअ ण मे हिअअं विस्ससदि [ सखि ! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति । ]

यस्य ॥ मन्त्रयितव्यमेव मन्त्रितं मया ॥ प्रिया खल्वहं तव ॥ न केवलं मम ॥ कस्य वाऽन्यस्य ? ॥ गुणेष्वभिनिवेशिनो भर्तुरपि ॥ अलीकं मन्त्रयसे । एतदेव मयि नास्ति। सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरेषु दृश्यतेऽङ्गेषु ॥ प्रथमं भणितमि हताशाया उत्तरम् ॥ अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणीकुरु। किमात्मनश्छन्देन मन्त्रयसि ? ॥ नहि नहि भर्तुः खल्वेतानि प्रणयमृदुलान्यक्ष राणि वक्रान्तरितानि ॥ सखि ! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति ॥ मुग्धे

पाठा०-१ ईसिपरिपंडरेसु.

**बकुलावलिका**—मुद्धे! भमरसंबाधो[1] त्ति वसंतावदारसव्वस्सं किं ण चूदप्पसवो ओदंसिदव्वो ?। [मुग्धे! भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ?।]

**मालविका**—तुमं दाव दुज्जादे गच्छतस्स[2] सहाया होहि। [त्वं तावद्दुर्जाते गच्छतः सहाया भव।]

**बकुलावलिका**—विमद्दसुरही बउलावलिआ खु अहं। [विमर्दसुरभिर्बकुलावलिका खल्वहम्।]

**राजा**—साधु, बकुलावलिके! साधु;

> **भावज्ञानानन्तरं प्रस्तुतेन**
> **प्रत्याख्याने दत्तयुक्तोत्तरेण।**
> **वाक्येनेयं स्थापिता स्वे निदेशे**
> **स्थाने प्राणाः कामिनां दूत्यधीनाः॥ १४॥**

**इरावती**—हञ्जे! पेक्ख कारिदं[3] एव्व बउलावलिआए एदस्सिं पदं मालविआए। [सखि! पश्य कारितमेव बकुलावलिकयैतस्मिन्पदं मालविकायाः।]

**निपुणिका**—भट्टिणि! अहिआरस्स[4] उइदो उवदेसो। [भट्टिनि! अधिकारस्योचित उपदेशः।]

**इरावती**—ठाणे खु संकिदं मे हिअअं। गहीदत्था अणंतरं चिंतइस्सं। [स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्थाऽनन्तरं चिन्तयिष्यामि।]

**बकुलावलिका**—एसो दुदीओ वि दे णिव्वुत्तपरिकम्मा चलणो। जाव दुवे[5] वि सणेउरं करेमि। (इति नाट्येन नूपुरयुगलमामुच्य) हला! उट्ठेहि, असोअविआसइत्तअं देवीए णिओअं अणुचिट्ठ। [एष द्विती-

---

भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ?॥ त्वं तावद्दुर्जाते गच्छतः सहाया भव। 'दुर्जातं व्यसने क्लीबमसम्यग्जातवस्तुनि' इति केशवस्वामी॥ विमर्दसुरभिर्बकुलावलिका खल्वहम्॥ **भावज्ञानेत्यादि**। स्पष्टोऽर्थः॥ सखि! पश्य कारितमेव बकुलावलिकयैतस्मिन्पदं मालविकायाः॥ भट्टिनि! अधिकारस्योचित उपदेशः॥ स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्थाऽनन्तरं चिन्तयिष्यामि॥ एष द्वितीयोऽपि ते निर्वृत्तपरिकर्मा चरणः। यावदेनं सनूपुरं करोमि। हला! उत्तिष्ठ। अशोकविकासयितृकं देव्या नियोग-

---

**पाठा०**–१ संपादो भविस्सदित्ति–**टीका०**. २ अच्चंतं (अत्यन्तं). ३ कारिदा. ४ णिव्विआरस्स विउस्सुअदाजणओ. ५ णं सणेउरं–**टीका०**.

योऽपि ते निर्वृत्तपरिकर्मा चरणः । यावद्द्वावपि सनूपुरौ करोमि । हला ! उत्तिष्ठ अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ । ]

( उभे उत्तिष्ठतः )

**इरावती**—सुदो देवीए णिओओ । होदु दाणिं । [ श्रुतो देव्या नियोगः । भवत्विदानीम् । ]

**बकुलावलिका**—एसो उवारूढराओ उअभोअक्खमो पुरदो दे वट्टइ । [ एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते । ]

**मालविका**—( सहर्षम् ) किं भट्टा ? । [ किं भर्ता ? । ]

**बकुलावलिका**—( सस्मितम् ) ण दाव भट्टा । एसो असोअसाहावलंबी पल्लवगुच्छओ । ओदंसेहि णं । [ न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छः । अवतंसयैनम् । ]

( मालविका विषादं नाटयति )

**विदूषकः**—अवि सुदं भवदा ? । [ अपि श्रुतं भवता ? ]

**राजा**—सखे ! पर्याप्तमेतावता कामिनाम् ;

अनातुरोत्कण्ठितयोः प्रसिद्ध्यता
समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

( मालविका रचितपल्लवावतंसा पादमशोकाय प्रहिणोति )

**राजा**—वयस्य !

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १६ ॥

---

मनुतिष्ठ ॥ श्रुतो देव्या नियोगः । भवत्विदानीम् ॥ एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ॥ किं भर्ता? ॥ न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छः । अवतंसयैनम् ॥ अपि श्रुतं भवता ? ॥ **अनातुरेत्यादि** । अनातुरोत्कण्ठितयोः । अनातुरोऽनार्तः । उत्कण्ठितः कामोत्कण्ठित इत्यर्थः । प्रसिद्ध्यता संभवता समागमेनापि संपर्केणापि मां प्रति मामनु, मत्पक्ष इत्यर्थः । रतिर्न शृङ्गारो भवति; एकानुरागस्य रसाभासत्वात् । तथा चोक्तम्—'एकत्रैवानुरागश्चेद्बहुसक्तिश्च योषितः । अनौचित्यप्रवृत्तिश्च शृङ्गाराभास उच्यते ॥' इति । शेषं स्पष्टम् ॥ **आदायेत्यादि** । कर्णकिसलयं कर्णपूरार्थं किसलयम् । अत्र 'कर्ण'शब्देन कर्णपूरो लक्ष्यते ॥ सखि !

**बकुलावलिका**—हला ! णत्थि दे दोसो । णिग्गुणो अअं असोओ जइ कुसुमोब्भेदमंथरो भवे जो दे चलणसक्कारं लंभिअ । [ सखि ! नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेत्, यस्ते चरणसत्कारं लब्ध्वा । ]

**राजा**—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः ।
अशोक ! यदि सद्य एव मुकुलैर्न संपत्स्यसे
वृथा वहसि दोहदं ललितकामिसाधारणम् ॥ १७ ॥

सखे ! वचनानुसरणपूर्वकं प्रवेष्टुमिच्छामि ।

**विदूषकः**—एहि, णं परिहासइस्सं । [ एहि, एनां परिहासयिष्यामि । ]

( उभौ प्रवेशं कुरुतः )

**निपुणिका**—भट्टिणि भट्टिणि ! भट्टा एत्थ पविसदि । [ भट्टिनि भट्टिनि ! भर्तात्र प्रविशति । ]

**इरावती**—एदं मम पढमं चिंतिदं हिअएण । [ एतन्मम प्रथमं चिन्तितं हृदयेन । ]

**विदूषकः**—( उपेत्य ) होदि ! जुत्तं णाम अत्तहोदो पिअवअस्सो अअं असोओ णं वामपादेण ताडिदुं । [ भवति ! युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोको ननु वामपादेन ताडयितुम् ।

**उभे**—( ससंभ्रमम् ) अम्हो, भट्टा । [ अहो, भर्ता । ]

**विदूषकः**—बउलावलिए ! गहीदत्थाए तुए अत्तहोदी ईरिसं अविणअं करंती कीस ण णिवारिदा ? । [ बकुलावलिके ! गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वन्ती कस्मान्न निवारिता ? ]

---

नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्भेदमन्थरो भवेत्, यस्ते चरणसत्कारं लब्ध्वा ॥ **अनेनेत्यादि** । स्पष्टोऽर्थः ॥ एहि, एनां परिहासयिष्यामि ॥ भट्टिनि भट्टिनि ! भर्तात्र प्रविशति ॥ एतन्मम प्रथमं चिन्तितं हृदयेन ॥ भवति ! युक्तं नाम अत्रभवतः प्रियवयस्योऽयमशोको ननु वामपादेन ताडयितुम् । 'जुत्तं णाम' इत्यत्र काकुरनुसंधेया ॥ अहो, भर्ता ॥ बकुलावलिके ! गृहीतार्थया त्वयात्रभवतीदृशमविनयं

---

पाठा०—१ कुसुमैर्न. २ वचनावसरपूर्वं.

( मालविका भयं रूपयति )

**निपुणिका**—भट्टिणि ! पेक्ख किं पउत्तं अज्जगोदमेण । [ भट्टिनि ! पश्य किं प्रवृत्तमार्यगौतमेन । ]

**इरावती**—कहं खु बम्हबंधू अण्णहा जीविस्सदि ? । [ कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति ? । ]

**बकुलावलिका**—अज्ज ! एसा देवीए णिओअं अणुचिट्ठदि । एदस्सिं अदिक्कमे परवदी इअं । पसीददु भट्टा । ( इत्यात्मना सहैनां प्रणिपातयति ) [ आर्य ! एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता । ]

**राजा**—यद्येवमनपराद्धासि । उत्तिष्ठ भद्रे ! । ( हस्तेन गृहीत्वैनामुत्थापयति )

**विदूषकः**—जुज्जइ, देवी एत्थ माणइदवा । [ युज्यते, देव्यत्र मानयितव्या । ]

**राजा**—( विहस्य )

> **किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे ।**
> **चरणस्य न ते बाधा संप्रति वामोरु ! वामस्य ॥ १८ ॥**

( मालविका लज्जां नाटयति )

**इरावती**—अहो, णवणीदकप्पहिअओ अज्जउत्तो । [ अहो, नवनीतकल्पहृदय आर्यपुत्रः । ]

**मालविका**—बउलावलिए ! एहि, अणुट्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह । [ बकुलावलिके ! एहि, अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः । ]

**बकुलावलिका**—[1]विण्णावेहि भट्टारं विसज्जेहि त्ति । [ विज्ञापय भर्तारं विसर्जयेति । ]

---

कुर्वन्ती कस्मान्न निवरिता ? ॥ **भयं रूपयतीति** । अत्र भयकथनात्संभ्रमणं नाम संध्यङ्गमुक्तं भवति ॥ भट्टिनि ! पश्य । किं प्रवृत्तमार्यगौतमेन ॥ कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति ? ॥ आर्य ! एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्ता ॥ युज्यते देव्यत्र मानयितव्या ॥ **किसलयेत्यादि** । स्पष्टोऽर्थः । अत्र प्रसक्त्या संग्रहो नाम संध्यङ्गमुक्तं भवति । अहो, नवनीतकल्पहृदय आर्यपुत्रः ॥ बकुलावलिके ! एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः ॥ विज्ञापय भर्तारं विसर्जयेति ॥ अवहिता शृणु । आज्ञापयतु भर्ता ॥

---

पाठा०-१ तेण हि विण्णावेहि.

**राजा**—भद्रे ! यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ।

**बकुलावलिका**—अवहिदा सुणाहि । आणवेदु भट्टा । [अवहिता शृणु । आज्ञापयतु भर्ता ।

**राजा**—

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥

**इरावती**—(सहसोपसृत्य) पूरेहि पूरेहि । असोओ कुसुमं ण दंसेदि । अअं उण पुंप्फदि एव्व । [पूरय पूरय । अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्प्यत्येव ।

(सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः)

**राजा**—(अपवार्य) वयस्य ! का प्रतिपत्तिरत्र ? ।

**विदूषकः**—किं अण्णं ? । जंघाबलं एव्व । [किमन्यत् ? । जङ्घाबलमेव ]

**इरावती**—बउलावलिए ! तुए साहु तुए उवक्कंतं । दाणिं सफलब्भत्थणं करेहि अज्जउत्तं । [बकुलावलिके ! त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् । ]

**उभे**—पसीददु भट्टिणी । का अम्हे भत्तुणो पणअपरिग्गहस्स ? । [प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ? । ] (इति निष्क्रान्ते)

**इरावती**—अविस्ससणीआ पुरिसा । अत्तणो वंचणावअणं पमाणीकरिअ आक्खित्ताए वाहजणगीदगहीदचित्ताए विअ हरिणीए एदं ण विण्णादं मए । [अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तयैव हरिण्यैतन्न विज्ञातं मया । ]

---

**धृतिपुष्पेति** । स्पष्टोऽर्थः ॥ पूरय पूरय । अशोकः कुसुमं न दर्शयति । अयं पुनः पुष्प्यत्येव । अत्र संरब्धवचनात्तोटकं नाम संध्यङ्गमुक्तं भवति ॥ **वयस्येत्यादि** । का प्रतिपत्तिः को विचारः ? क उपाय इत्यर्थः । अत्र भीतेर्गम्यमानार्थत्वादुद्वेगो नाम संध्यङ्गमुक्तं भवति ॥ किमन्यत् ? । जङ्घाबलमेव ॥ बकुलावलिके ! त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् । प्रसीदतु भट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ?॥ अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनावचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तयैव हरिण्यैतन्न विज्ञातं मया ।

---

**पाठा०**–१ पुप्फदि फलदि अ. २ मालविए ! तुमं दाव सफलपत्थणं.

**विदूषकः**—( जनान्तिकम् ) भो! पडिजाएहि किंपि उत्तरं । कम्मग्गहीदेण वि कुंभीलएण संधिच्छेदे सिक्खिओम्मि त्ति वत्तव्वं होदि । [ भो ! प्रतियोजय किमप्युत्तरम् । कर्मगृहीतेनापि कुम्भीलकेन संधिच्छेदे शिक्षितोऽस्मीति वक्तव्यं भवति । ]

**राजा**—सुन्दरि ! न मे मालविकया कश्चिदर्थः । मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः ।

**इरावती**—विस्ससणीओसि । ण मए विण्णादं ईरिसं विणोदवुत्तंतं अज्जउत्तेण उवलद्धं त्ति । अण्णहा दुक्खभाइणीए एव्वं ण करीअदि । [ विश्वसनीयोऽसि । न मया विज्ञातमीदृशं विनोदवृत्तान्तमार्यपुत्रेणोपलब्ध इति । अन्यथा दुःखभागिन्यैवं न क्रियते । ]

**विदूषकः**—मा दाव अत्तभवदो दक्खिण्णस्स उअरोहं करेहि । समावदिट्ठेण देवीए परिचारिइत्थिआजणेन संकहावि जयि वारीअदि, एत्थ तुमं एव पमाणं । [ मा तावदत्रभवतो दाक्षिण्यस्योपरोधं कुरु । समीपदृष्टेन देव्याः परिचारिस्त्रीजनेन संकथापि यदि वार्यते, अत्र त्वमेव प्रमाणम् । ]

**इरावती**—णं संकहा णाम होदु । किंति अत्ताणं आआसइस्सं ? । (इति रुषा प्रस्थिता) [ ननु संकथा नाम भवतु । किमित्यात्मानमायासयिष्यामि ? । ]

**राजा**—( अनुसरन् ) प्रसीदतु भवती ।

( इरावती रशनासंधारितचरणा व्रजत्येव )

**राजा**—सुन्दरि ! न शोभते प्रणयिनि जने निरपेक्षता ।

**इरावती**—सठ ! अविस्ससणीअहिअओसि । [ शठ ! अविश्वसनीयहृदयोऽसि । ]

---

एतदित्यनेन राज्ञा कृतं कपटकृत्यं परामृश्यते ॥ भो ! प्रतियोजय किमप्युत्तरम् । संधेः कृत्रिमभूसंधेश्छेदे भेदने, सुरङ्गाकरण इत्यर्थः । शिक्षितः अभ्यसितोऽस्मीति वक्तव्यं भवति । किमपि प्रतियोजय । उपपन्नमनुपपन्नं वा उत्तरं कुर्वित्यर्थः । विश्वसनीयोऽसि । न मया विज्ञातमीदृशं विनोदवृत्तान्तमार्यपुत्रेणोपलब्ध इति । अन्यथा दुःखभागिन्यैवं न क्रियते ॥ विश्वसनीय इत्यत्र विपरीतलक्षणानुसंधेया ॥ मा तावदत्रभवतो दाक्षिण्यस्योपरोधं कुरु । समीपदृष्टेन देव्याः परिचारिस्त्रीजनेन संकथापि यदि वार्यते, अत्र त्वमेव प्रमाणम् ॥ ननु संकथा नाम भवतु ।

---

पाठा०—१ पडिप्पजेहि-टीका०. २ वत्थ. ३ मंदभाइणीए; दुक्खतरं; दुक्कर.

**राजा—**

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि ! तां
विसृजसि मेखलयापि याचिता ॥ २० ॥

**इरावती—**इअं पि हदासा तुमं एव्व अणुसरदि । (इति रशनामादाय राजानं ताडयितुमिच्छति) [इयमपि हताशा त्वामेवानुसरति ।]

**राजा—**वयस्य ! इयमिरावती,—

वाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन[1] ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

**इरावती—**किं मं एव्व भूओ वि अवरद्धं करेसि ? । [किं मामेव भूयोऽप्यपराद्धां करोषि ? ।]

**राजा—**(सरशनं हस्तमवलम्बयति)

अपराधिनि मयि दण्डं संहरसि किमुद्यतं कुटिलकेशि ! ।
वर्धयसि विलसितं त्वं दासजनायाद्य कुप्यसि च ॥ २२ ॥

नूनमिदमनुज्ञातम् । (इति पादयोः पतति ।)

**इरावती—** ण खु इमे मालविआचलणा, जा दे हरिसदोहलं पूरयिस्संति । (इति निष्क्रान्ता सह चेट्या) [न खल्विमौ मालविकाचरणौ, यौ ते हर्षदोहदं पूरयिष्यतः । ]

---

किमित्यात्मानमायासयिष्यामि ? ॥ शठ ! अविश्वसनीयहृदयोऽसि ॥ **शठ इत्यादि ।** हे प्रिये ! परिचयवति परिचयः संस्तवो यस्य स परिचयवान् । अतिशायने मतुप् तस्मिन्मयि शठ इति गूढविप्रियकारीति अवधीरणा तिरस्कारोऽस्तु । अतः 'अतिपरिचयादवज्ञा' इति वदन्ति । तस्मादियमवधीरणा युक्तैवेत्यर्थः । हे चण्डि अत्यन्तकोपने ! चरणपतितया मेखलया रशनया याचितापि प्रार्थितापि तामवधीरणां न विसृजसि न त्यजसि । किमिदं युक्तमिति शेषः ॥ इयमपि हताशा त्वामेवानुसरति ॥ **बाष्पासारेत्यादि ।** स्पष्टोऽर्थः ॥ किं मामेव भूयोऽप्यपराद्धां करोषि ? **अपराधिनीत्यादि ।** स्पष्टोऽर्थः ॥ **नूनमित्यादि ।** इदमेतद्दशनासंहरणमनु-

---

पाठा०–१ दप्यपेक्षाच्युतेन.

**विदूषकः**—उट्ठेहि, अकिदप्पसादोऽसि । [उत्तिष्ठ, अकृतप्रसादोऽसि । ]

**राजा**—(उत्थायेरावतीमपश्यन्) तत्कथं गतैव प्रिया ? ।

**विदूषकः**—वअस्स ! दिट्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा एसा । ता वअं सिग्घं अवक्कमाम । जाव अंगारओ रासिं विअ अणुवक्कं परिगमणं ण करेदि । [वयस्य ! दिष्ट्या अनेनाविनयेनाप्रसन्ना गतैषा । तद्वयं शीघ्रमपक्रामामः । यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति । ]

**राजा**—अहो मदनस्य वैषम्यम् ।

**मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।**
**एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥**

(इति निष्क्रान्तः सह वयस्येन)

इति तृतीयोऽङ्कः ।

---

ज्ञातमनुमतम्, मत्प्रार्थनाया इति शेषः ॥ न खल्विमौ मालविकाचरणौ, यौ हर्षदोहदं पूरयिष्यतः ॥ उत्तिष्ठ, अकृतप्रसादोऽसि ॥ वयस्य ! दिष्ट्या अनेनाविनयेना प्रसन्ना गतैषा । तस्माद्वयं शीघ्रमपक्रामामः । यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति ॥ **मन्य इत्यादि** । प्रियाहृतमना मालविकाहृतमनाः प्रणिपातलङ्घनं प्रणामातिक्रमं तस्या इरावत्याः सेवामनुकूलाचरणं मन्ये । सेवायाः फलमाह—कुपिता क्रुद्धा प्रणयवती प्रेमवती सा इरावती एवमनेन क्रमेण प्रणिपातलङ्घनरूपेणोपेक्षितुमौदासीन्येन वर्तितुं शक्यं शक्या खलु । शक्यमिति निपातः । अत्र बीजानुसंधानादाक्षेपो नाम संध्यङ्गमुक्तं भवति । इदमनुसंधानमेवोत्तराङ्ककथोपयोगित्वाद्बिन्दुरित्यनुसंधेयम् ॥ **इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने तृतीयोऽङ्कः ॥**

टिप्प०—1 अङ्गारकं विना प्रायः सर्वेऽपि संमुखा ग्रहाः शुभफलदा भवन्ति अङ्गारकस्तु राशिप्रविष्टः संमुखश्च पीडा-हानिकरो भवतीति ग्रहलाघवादौ प्रसिद्धम् अत एवेयमुपमा नितरां संगच्छते ।

## चतुर्थाङ्कस्य कथावस्तु

मालविकावृत्तान्तज्ञानार्थं संप्रेषितो विदूषकः प्रविश्य राज्ञ इत्थं निवेदितवान्–रुजाक्रान्तचरणां देवीं सुखं प्रष्टुमागतयेरावत्या मालविकोपसर्पणात्मकमविनयमधिगम्य साशंकीभूय च सा बकुलावलिकया सह भूगृहे निगडबन्धनं कारितेति। देव्या भूगृहव्यापृता माधविकाऽपि–त्वया मम नागमुद्रांगुलीयकमदृष्ट्वा मालविका–बकुलावलिके न मोक्तव्ये इत्याज्ञप्ता। स्वप्रेयस्या बन्धनात्मकं वृत्तमिदमनुश्रूय नितरां खिन्नहृदयो राजा 'सखे ! किमत्र कर्तव्यम् ?' इति विदूषकं पर्यपृच्छत्। स च अस्त्यत्रोपायः कोऽप्यन्यानाकलनीय इति राज्ञः कर्णे एवाकथयत्। तच्छ्रुत्वा सहर्षं प्रयोगसिद्धयै तं विसर्जयामास। स्वयमपि प्रवातशयनास्थितां सरुजचरणां देवीं द्रष्टुमगच्छत्। एतदन्तरे केतकीपत्रकृतदंशचिह्नो यज्ञोपवीतबद्धांगुष्ठो व्याकुलो विदूषकः सर्परूपेण कालेन दष्टोऽस्मीति सर्पदंशं नाटयन् प्रविशति। तं तथाविधं दृष्ट्वा विषवैद्य–ध्रुवसिद्धिविज्ञापनानुगुणं तत्सकाशं नीयतां सद्यो विषचिकित्सार्थमित्याज्ञापयामास। अथ च ध्रुवसिद्धिरुदकुम्भविधाने सर्पमुद्रासनार्थं किमप्याभरणं कल्पयितव्यमिति, विज्ञापयामास। तच्छ्रुत्वा विदूषकजीवितं संदेहास्पदमिति च मत्वा धारिणी स्वयमेवात्मनो नागमुद्रासमेतमंगुलीयकं प्रददौ। विदूषकस्तदंगुलीयकं समासाद्य मालविकाबकुलावलिके निगडबन्धनात्संमोचितवान्। अथ स सखीसहितां मालविकां समुद्रगृहे स्थापयित्वा राज्ञा सह तां संगमयामास। समुद्रगृहालिन्दे शयित एकाकी गौतम इति श्रुत्वा तं द्रष्टुमन्यसंक्रान्तचेतसं चित्रगतं राजानं च प्रसादयितुं समुद्रगृहगता इरावती मालविकायां बद्धानुरागं राजानमवलोक्योपालम्भयितुमारब्धवती। एतदन्तरे कन्दुकमनुधावन्ती कुमारी वसुलक्ष्मीः पिङ्गलवानरेण बलवत्त्रासिताङ्कनिषण्णा वेपमाना न किमपि प्रकृतिं प्रतिपद्यते इति प्रतिहार्या निवेदनं श्रुत्वा ससंभ्रमं सर्वे विनिष्क्रान्ताः। मालविका तु 'इदं प्रणयवृत्तं ज्ञात्वा देवी किं करिष्यति' इति जातसाध्वसा ससन्देहा च समभवत्। अपूर्णे एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोक इत्येतदन्तरे वार्तां श्रुत्वा देव्याः सत्यप्रतिज्ञतां प्रति जातविश्वासा मालविका स्वहृदयं कथमपि समाश्वास्य सख्या सममयासीदिति वस्तु संग्रथितमत्र।

## चतुर्थोऽङ्कः

( ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च )

**राजा**—( आत्मगतम् )

**तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः**
**संप्राप्तायां नयनविषयं रूढरागप्रवालः ।**
**हस्तस्पर्शैर्मुकुलित इव व्यक्तरोमोद्गमत्वा-**
**त्कुर्यात्कान्तं मनसिजतरुर्मा रसज्ञं फलस्य ॥ १ ॥**

( प्रकाशम् ) सखे गौतम ! ।

**प्रतीहारी**—जेदु जेदु भट्टा । असंणिहिदो गोदमो । [ जयतु जयतु भर्ता । असंनिहितो गौतमः । ]

**राजा**—( आत्मगतम् ) आः, मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

**विदूषकः**—( प्रविश्य ) वड्ढदु भवं । [ वर्धतां भवान् । ]

**राजा**—जयसेने ! जानीहि तावत्क देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ।

**प्रतीहारी**—जं देवो आणवेदि । [ यद्देव आज्ञापयति । ] ( इति निष्क्रान्ता )

**राजा**— गौतम ! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ? ।

**विदूषकः**—जो बिडालगहीदाए परहुदिआए । [ यो बिडालगृहीतायाः परभृतिकायाः । ]

**राजा**—( सविषादम् ) कथमिव ? ।

**विदूषकः**—सा खु तवस्सिणी तए पिंगलच्छिए सारभंडभूघरए गुहाए विअ णिक्खित्ता । [ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता । ]

---

कविरिदानीमङ्कान्तरमारभते—**ततः प्रविशतीत्यादिना । तामिति ।** मुकुलित इव संजातमुकुल इव कान्तं कामनायुक्तं कुर्यादिति प्रार्थनायां लिङ् । अत्र प्रसञ्जितं बीजं प्रकरीस्थाने कृतमिति मन्तव्यम् ॥ जयतु जयतु भर्ता । असंनिहितो गौतमः ॥ वर्धतां भवान् ॥ यद्देव आज्ञापयति ॥ यो बिडालगृहीतायाः परभृतिकायाः ॥ सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्ड भूगृहे गुहायामिव

**पाठा०–१ आस्थया. २ हस्तस्पर्शै. ३ क्लान्तं. ४ सखे.**

टिप्प०–1 सारभाण्डभूगृहं नाम 'कोठार' सदृशमन्धकारमयं भूगर्भस्थानम् ।

**राजा**—ननु मत्संपर्कमुपलभ्य ? ।

**विदूषकः**—अह इं । [अथ किम् ।]

**राजा**—क एवं विमुखोऽस्माकम्—येन चण्डीकृता देवी ? ।

**विदूषकः**—सुणादु भवं, परिव्वाजिआए मे कहिदं । हिओ किल तत्तहोदी इरावदी रुअक्कंतचलणं देविं सुहं[1] पुच्छिदुं आअदा । [श्रृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखं प्रष्टुमागता ।]

**राजा**—ततस्ततः ? ।

**विदूषकः**—तदो सा देवीए पुच्छिदा—किं णु ओलोइदो वल्लहजणो त्ति । ताए उत्तं—मंदो वो उवआरो जं परिजणे संकंतं वल्लहत्तणं ण जाणीअदि । [ततः सा देव्या पृष्टा—किन्ववलोकितो वल्लभजन इति । तयोक्तम्—मन्दो व उपचारः यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते ।]

**राजा**—अहो, निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति ।

**विदूषकः**—तदो ताए अणुबंधिज्जमाणाए सा भवदो अविणअं अंतरेण परिगदत्था किदा देवी । [ततस्तयानुबध्यमानया सा भवतोऽविनयमन्तरेण परिगतार्था कृता देवी ।]

**राजा**—अहो, दीर्घरोषता तत्रभवत्याः । अतः परं कथय ।

**विदूषकः**—किं अवरं ? । मालविआ बउलावलिआ अ पादालवासं णिगलपदीओ अदिट्ठसुज्जपादं णागकण्णआओ विअ अणुहोंति । [किमपरम् ? । मालविका बकुलावलिका च पातालवासं निगडपद्यावदृष्टसूर्यपादं नागकन्यके इवानुभवतः ।]

**राजा**—कष्टं कष्टम्,—

---

निक्षिप्ता ॥ अथ किम् ॥ श्रृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः पूर्वेद्युः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखपृच्छिकागता ॥ ततः सा देव्या पृष्टा—किन्ववलोकितो वल्लभजन इति । तयोक्तम्—मन्दो व उपचारः यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते । निर्भेदादृतेऽपि स्फुटीकरणं विनापि ॥ ततस्तयानुबध्यमाना सा भवतोऽविनयमन्तरेण परिगतार्था कृता देवी । धारिणी राज्ञोऽविनयमिरावत्याः सकाशाज्ज्ञातवतीत्यर्थः ॥ किमपरम् ? । मालविका बकुलावलिका च पातालवासं निगड-

---

पाठा०-१ सुहपुच्छिआ-टीका०.

**मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।**
**कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥**

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ? ।

**विदूषकः**—कहं भविस्सदि ? । जं सारभांडघरव्यापारिदा माह- विआ देविए संदिट्ठा–मह अंगुलीअमुद्दिअं अदेक्खिअ ण मोत्तवा तुए हदासा मालविआ बउलावलिआ अत्ति । [कथं भविष्यति ? । यत्सार- भाण्डगृहव्यापारिता माधविका देव्या संदिष्टा–ममाङ्गुलीयकमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति ।

**राजा**—( निःश्वस्य, सपरामर्शम् ) सखे ! किमत्र कर्तव्यम् ? ।

**विदूषकः**—( विचिन्त्य ) अत्थि एत्थ उवाओ । [अस्त्यत्रोपायः।]

**राजा**—क इव ? ।

**विदूषकः**—( सदृष्टिक्षेपम् ) को वि अदिट्ठो सुणिस्सदि । कण्णे दे कहेमि । ( इत्युपश्लिष्य कर्णे ) एवं विअ [कोऽप्यदृष्टः श्रोष्यति । कर्णे ते कथयामि । एवमिव । ] ( इत्यावेदयति )

**राजा**—( सहर्षम् ) सुष्ठु; प्रयुज्यतां सिद्धये ।

( प्रविश्य )

**प्रतीहारी**—देव ! पवादसअणे देवी णिसण्णा रत्तचंदण- धारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदि- ज्जमाणा चिट्ठदि । [देव ! प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ।

**राजा**—तेन ह्यसत्प्रदेशयोग्योऽयमवसरः ।

**विदूषकः**—ता गच्छदु भवं। अहं वि देविं पेक्खिदुं अरित्तपाणी भविस्सं । [ तद्गच्छतु भवान् । अहमपि देवीं द्रष्टुमरिक्तपाणिर्भविष्यामि ]

---

पद्मावदृष्टसूर्यपादं नागकन्यके इवानुभवतः ॥ **मधुरस्वरेत्यादि** । स्पष्टोऽर्थः ॥ कथं भविष्यति ? । यत्सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा । ममाङ्गुलीयकमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति ॥ अस्त्यत्रोपायः ॥ कोऽप्यदृष्टः श्रोष्यति । कर्णे ते कथयामि । एवमिव । अत्र राज्ञः कर्णे विदूषकोक्त उपायो नियमेन मालविकाप्राप्तिहेतुत्वान्नियताप्तिर्नाम चतुर्थावस्था सूचिता ॥ अत्र पूर्वं प्रकरीस्थानोक्तबीजस्यानया नियतास्या समन्वयादवमर्शो नाम चतुर्थसंधिः प्रतिपादित इति मन्तव्यम् ॥ देव ! प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवतया कथाभिर्विनोद्यमाना तिष्ठति ॥ भो ! गच्छतु भवान् । अहमपि देवीं

**राजा**—जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु ।

**विदूषकः**—तह । (इति कर्णे) एव्वं विअ होदि । [तथा । एवमिव भवति । ] (इत्यावेद्य निष्क्रान्तः)

**राजा**—जयसेने ! प्रवातशयनमार्गमादेशय ।

**प्रतीहारी**—इदो इदो देवो । [इत इतो देवः । ]

(ततः प्रविशति शयनस्था देवी परिव्राजिका उभयतश्च परिवारः ।)

**देवी**—भअवदि ! रमणिज्जं कहावत्थु । तदो तदो ? । [भगवति ! रमणीयं कथावस्तु । ततस्ततः ? । ]

**परिव्राजिका**—(सदृष्टिक्षेपम्) देवि ! अतःपरं पुनः कथयिष्यामि । अत्रभवान्विदिशेश्वरः संप्राप्तः ।

**देवी**—अम्हो, भट्टा । [अहो, भर्ता । ] (इत्युत्थातुमिच्छति)

**राजा**—अलमलमुपचारयन्त्रणया ।

**अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।**
**चरणं रुजा परीतं कलभाषिणि! मां च पीडयितुम् ॥ ३ ॥**

**धारिणी**—जेदु जेदु अज्जउत्तो । [जयतु जयत्वार्यपुत्रः । ]

**परिव्राजिका**—विजयतां देवः ।

**राजा**—(परिव्राजिकां प्रणम्योपविश्य) देवि ! अपि सह्या वेदना ? ।

**धारिणी**—अज्ज अत्थि मे विसेसो । [अद्यास्ति मे विशेषः । ]

(ततः प्रविशति यज्ञोपवीतबद्धाङ्गुष्ठः संभ्रान्तो विदूषकः)

**विदूषकः**—परित्ताअदु परित्ताअदु भवं । सप्पेण दट्ठोम्हि । [परित्रायतां परित्रायतां भवान् । सर्पेण दष्टोऽस्मि । ]

(सर्वे विषण्णाः)

**राजा**—कष्टं कष्टम्; क भवान्परिभ्रान्तः ? ।

**विदूषकः**—देविं देक्खिस्सं त्ति आआरपुप्फग्गहणकारणादो पमदवणं गदोम्हि । [देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं गतोऽस्मि । ]

---

द्रष्टुमरिक्तपाणिर्भविष्यामि ॥ तथा । एवमिव भवति ॥ इत इतो देवः ॥ भगवति ! रमणीयं कथावस्तु । ततस्ततः ? ॥ अहो भर्ता ॥ **अनुचितेति** । स्पष्टोऽर्थः ॥ जयतु जयत्वार्यपुत्रः ॥ अद्यास्ति मे विशेषः ॥ **तत इति** । यज्ञोपवीतेन बद्धोऽङ्गुष्ठो यस्य स तथोक्तः । अत्र कल्पनाया गम्यमानत्वाच्चलनं नाम संध्यङ्गमुक्तं भवति ॥ परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः ॥ देवीं द्रक्ष्यामीत्याचारपुष्पग्रहणकारणात्प्रमदवनं

---

टिप्प०–1 'न रिक्तपाणिः समुपतिष्ठेत्' इत्याचारः, तदर्थं पुष्पाहरणम्; तथा चोक्तं रघुवंशे (२।१०) 'प्रसूनैराचारलाजैरिव पौरकन्याः' इति ।

**देवी**—हद्धी हद्धी, अहं एव्व बम्हणस्स जीविदसंसअणिमित्तं जादम्हि। [हा धिक् हा धिक्; अहमेव ब्राह्मणस्य जीवितसंशयनिमित्तं जातास्मि।]

**विदूषकः**—तहिं असोअत्थवअकालणादो पसारिदो दक्खिण-हत्थो। तदो कोडरणिग्गदेण सप्परूवेण कालेण दट्ठोम्हि। णं एदाइं दुवे दंसणपदाइं। [तस्मिन्नशोकस्तबककारणात्प्रसारितो दक्षिणहस्तः। ततः कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। नन्वेते द्वे दंशनपदे।] (इति दंशं दर्शयति)

**परिव्राजिका**—तेन हि दंशच्छेदः पूर्वकर्मेति श्रूयते। स तावदस्य क्रियताम्।

> **छेदो[1] दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम्।**
> **एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः॥ ४॥**

**राजा**—संप्रति विषवैद्यानां कर्म। जयसेने! क्षिप्रमानीयतां ध्रुवसिद्धिः।

**प्रतीहारी**—जं देवो आणवेदि। [यद्देव आज्ञापयति।] (इति निष्क्रान्ता)

**विदूषकः**—अहो, पावेण मिच्चुणा गहीदोम्हि। [अहो, पापेन मृत्युना गृहीतोऽस्मि।]

**राजा**—मा कातरो भूः। अविषोऽपि कदाचिद्दंशो भवेत्।

**विदूषकः**—कहं ण भाइस्सं?। सिमसिमाअंति मे अंगाइं। [कथं न भेष्यामि। सिमसिमायन्ति मेऽङ्गानि।] (इति विषवेगं रूपयति)

**देवी**—हा, दंसिदं असुहं विआरेण। अवलंबध बम्हणं। [हा, दर्शितमशुभं विकारेण। अवलम्बध्वं ब्राह्मणम्।]

---

गतोऽस्मि॥ हा धिक् हा धिक्, अहमेव ब्राह्मणस्य जीवितसंशयनिमित्ते जातास्मि॥ तस्मिन्नशोकस्तबककारणात्प्रसारितो दक्षिणहस्तः। ततः कोटरनिर्गतेन सर्परूपेण कालेन दष्टोऽस्मि। नन्वेते द्वे दंशनपदे॥ **छेदो दंशस्येत्यादि**। स्पष्टोऽर्थः॥ ध्रुवसिद्धिरिति तस्य वैद्यस्य नाम॥ यद्देव आज्ञापयति॥ अहो, पापेन मृत्युना गृहीतोऽस्मि कथं न भेष्यामि?। सिमसिमायन्ति मेऽङ्गानि। अनेन संतापः सूच्यते। विषवेगं विषप्राप्तिं रूपयति प्रकाशयति। विषवेगास्तु वसन्तराजीये कथिताः—'वैवर्ण्यं वेपथुर्दाहः फेनः स्कन्दस्य भञ्जनम्। दुःखं जाड्यं मृतिश्चेति विषवेगाः स्युरष्टधा॥ इति॥ हा कष्टम्। दर्शितमशुभं विकारेण। अवलम्बध्वं ब्राह्मणम्॥

---

टिप्प०-1 तच्चोक्तमष्टाङ्गहृदये—'दष्टमात्रो दशेदाशु तमेव पवनाशिनम्। तेन सर्पं विषं याति यतो नुर्दशने विषम्॥ प्रतप्तैर्हेमलोहाद्यैर्दहेदाशूल्मुकेन वा करोति भस्मसात्सद्यो वह्निः किं नाम न क्षणात्॥' इति।

( परिजनः ससंभ्रममवलम्बते )

**विदूषकः**—( राजानं विलोक्य ) भोः! भवदो बालत्तणादो वि पिअवअस्सोम्हि । तं विआरिअ अपुत्ताए मे जणणीए जोगक्खेमं वहेहि । [ भोः! भवतो बाल्यादपि प्रियवयस्योऽस्मि । तद्विचार्यापुत्राया मे जनन्या योगक्षेमं वह । ]

**राजा**—मा भैषीर्गौतम! स्थिरो भव । अचिरात्त्वां वैद्यश्चिकित्सिष्यति ।

( प्रविश्य )

**जयसेना**—देव! आणाविदो धुवसिद्धी विण्णावेदि–इह एव्व आणीअदु सो गोदमो त्ति। [देव ! आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति–इहैवानीयतां स गौतम इति । ]

**राजा**—तेन हि वर्षवरपरिगृहीतमेनं तत्रभवतः सकाशं प्रापय ।

**जयसेना**—तहा । [ तथा । ]

**विदूषकः**—( देवीं विलोक्य ) भोदि! जीवेअं वा ण वा? जं मए अत्तभवंतं सेवमाणेण ते अवरद्धं तं मरिसेहि । [ भवति! जीवेयं वा न वा? । यन्मयाऽत्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व । ]

**देवी**—दीहाऊ होहि । [ दीर्घायुर्भव । ]

( निष्क्रान्तो विदूषकः प्रतीहारी च )

**राजा**—प्रकृतिभीरुस्तपस्वी, ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते ।

( प्रविश्य )

**जयसेना**—जेदु जेदु भट्टा । धुवसिद्धी विण्णावेदि उदकुंभविहाणेण सप्पमुद्दिअं किंपि कप्पइदव्वं । तं अण्णेसीअदु त्ति । [ जयतु

---

भोः, भवतो बाल्यादपि प्रियवयस्योऽस्मि । तं विचार्यापुत्राया मे जनन्या योगक्षेमं वह ॥ देव! आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति इहैवानीयतां स गौतम इति ॥ तथा ॥ भवति जीवेयं वा न वा! । यन्मयात्रभवन्तं सेवमानेन तेऽपराद्धं तन्मृष्यस्व ॥ दीर्घायुर्भव ॥ जयतु जयतु भर्ता ॥ ध्रुवसिद्धिर्विज्ञापयति उदकुम्भविधानेन सर्प-

---

**पाठा०**–१ चिकित्सते. २ यथार्थनाम्नः सिद्धिं न मन्यते.

---

टिप्प०–1 तच्चोक्तं **भैरवतन्त्रे**—'घटमेकं समादाय मृन्मयं चात्रणं शुभम् । कन्याकर्तितसूत्रेण वेष्टनं तद्गले चरेत् ॥ तं घटं पूरयेन्मन्त्रमिममुच्चार्य यत्नतः । ॐ नमः पुरुषसिंहाय नमो नारायणाय च । यथासौ नाभिजानाति रणे कृष्णः पराजयम् ॥' इत्यादिना । 2 'नागमुद्रां ततः कृत्वा पूजयेत्संस्तुवीत च ।' इति रसरत्नावल्यां नागमुद्राविधिरुक्तः ।

जयतु भर्ता । ध्रुवसिद्धिर्विज्ञापयति–उदकुम्भविधानेन सर्पमुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति । ]

**धारिणी**—इदं सप्पमुद्दिअं अंगुलीअअं । पच्छा मम हत्थे देहि णं । [ इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्मम हस्ते देह्येतत् । ] ( इत्यङ्गुलीयकं ददाति )

( प्रतीहारी गृहीत्वा स्थिता )

**राजा**—जयसेने ! कर्मसिद्धावाशु प्रतिपत्तिमानय ।

**प्रतीहारी**—जं देवो आणवेदि । [ यद्देव आज्ञापयति । ]

**परिव्राजिका**—यथा मे हृदयमाचष्टे तथा निर्विषो गौतमः ।

**राजा**—भूयादेवम् ।

( प्रविश्य )

**जयसेना**—जेदु देवो भट्टा । णिवुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो । [ जयतु देवो भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः । ]

**धारिणी**—दिट्ठिआ वअणीआदो मुत्तम्हि । [ दिष्ट्या वचनीयान्मुक्तास्मि । ]

**प्रतीहारी**—एसो उण अमच्चो वाहतओ विण्णवेदि—राअकज्जं बहु मंतिदव्वं, दंसणेण अणुग्गहं इच्छामि त्ति । [ एष पुनरमात्यो वाहतकोविज्ञापयति—राजकार्यं बहु मन्त्रयितव्यं, तद्दर्शनेनानुग्रहमिच्छामीति । ]

**धारिणी**—गच्छदु अज्जउत्तो कज्जसिद्धीए । [ गच्छत्वार्यपुत्रः कार्यसिद्धये । ]

**राजा**—देवि ! आतपाक्रान्तोऽयमुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनीयम् ।

**देवी**—बालिआओ ! अज्जउत्तवअणं अणुचिट्ठह । [ बालिकाः ! आर्यपुत्रवचनमनुतिष्ठत । ]

**परिजनः**—तह । [ तथा । ]

( निष्क्रान्ता देवी परिव्राजिका परिजनश्च )

**राजा**—जयसेने ! गूढेन पथा मां प्रमदवनं प्रापय ।

---

मुद्रितं किमपि कल्पयितव्यम् । तदन्विष्यतामिति ॥ इदं सर्पमुद्रितमङ्गुलीयकम् । पश्चान्ममहस्ते देह्येतत् ॥ यद्देव आज्ञापयति ॥ जयतु देवो भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ॥ दिष्ट्या वचनीयान्मुक्तास्मि ॥ एष पुनर्वाहतकोऽमात्यो विज्ञापयति । राजकार्यं बहु मन्त्रयितव्यम् । दर्शनेनानुग्रहमिच्छामीति ॥ गच्छत्वार्यपुत्रः कार्यसिद्धये ॥ बालिकाः ! आर्यपुत्रवचनमनुतिष्ठत ॥ तथा॥

**जयसेना**—इदो इदो देवो । [इत इतो देवः ।]

**राजा**—जयसेने ! समाप्तकृत्यो ननु गौतमः ।

**जयसेना**—अह इं । [अथ किम्]

**राजा**—

इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि[1] मत्वा ।
संदिग्धमेव सिद्धौ[2] कातरमाशङ्कते हृदयम्[3] ॥ ५ ॥

(प्रविश्य)

**विदूषकः**—वड्ढदु भवं । सिद्धाइं दे मंगलकम्माइं । [वर्धतां भवान् । सिद्धानि ते मङ्गलकर्माणि ।]

**राजा**—जयसेने ! त्वमपि स्वं नियोगमशून्यं कुरु ।

**जयसेना**—जं देवो आणवेदि । [यद्देव आज्ञापयति ।] (इति निष्क्रान्ता)

**राजा**—गौतम ! क्षुद्रा माधविका । न खलु किंचिद्विचारितमनया ।

**विदूषकः**—देवीए अंगुलीअअमुद्दिअं देक्खिअ कहं विआरेदि ?। [देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति ?।]

**राजा**—न खलु मुद्रामधिकृत्य ब्रवीमि । एतयोर्बद्धयोः किंनिमित्तो मोक्षः ? । किं वा देव्याः परिजनमतिक्रम्य भवान्संदिष्ट इत्येवमनया प्रष्टव्यम् ।

**विदूषकः**—णं पुच्छिदोम्हि । पुणो मंदस्स वि मे तस्सिं पच्चुप्पण्णा मदी । [ननु पृष्टोऽस्मि । पुनर्मन्दस्यापि मे तस्मिन्प्रत्युत्पन्ना मतिः ।]

**राजा**—कथ्यताम् ।

**विदूषकः**—भणिदं मए—देवचिंतएहिं विण्णाविदो राआ । सोवसग्गं वो णक्खत्तं, ता अवस्सं सव्वबंधमोक्खो करीअदु त्ति । [भणितं मया—दैवचिन्तकैर्विज्ञापितो राजा। सोपसर्गं वो नक्षत्रम् । तदवश्यं सर्वबन्धनमोक्षः क्रियतामिति ।]

---

इत इतो देवः ॥ अथ किम् ॥ **इष्टाधिगमेत्यादि** । स्पष्टोऽर्थः ॥ वर्धतां भवान् । सिद्धानि ते मङ्गलकर्माणि ॥ यद्देव आज्ञापयति ॥ देव्या अङ्गुलीयकमुद्रां दृष्ट्वा कथं विचारयति ? ॥ ननु पृष्टोऽस्मि । पुनर्मन्दस्यापि मे तस्मिन्प्रत्युत्पन्ना मतिः ॥ भणितं मया—दैवचिन्तकैर्विज्ञापितो राजा । सोपसर्गं वो नक्षत्रम् । तदवश्यं सर्वबन्धमोक्षः

---

**पाठा०**—१ साधुमपि. २ सिद्धौ. ३ चेतः ।

**राजा**—( सहर्षम् ) ततस्ततः ? ।

**विदूषकः**—तं सुणिअ देवीए इरावदीचित्तं रक्खंतीए राआ किल मोएदि त्ति अहं संदिट्ठो त्ति । तदो जुज्जदि त्ति ताए एव्वं संपादिदो अत्थो । [ तच्छ्रुत्वा देव्या इरावतीचित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति । ततो युज्यत इति तयैवं संपादितोऽर्थः । ]

**राजा**—( विदूषकं परिष्वज्य ) सखे ! प्रियोऽहं खलु तव ।

**न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।**
**कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ६ ॥**

**विदूषकः**—तुवरदु भवं । समुद्दघरए सहीसहिदं मालविअं ठाविअ भवंतं पच्चुग्गदोम्हि । [ त्वरतां भवान् ! समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि । ]

**राजा**—अहमेनां संभावयामि । गच्छाग्रतः ।

**विदूषकः**—एदु भवं। ( परिक्रम्य ) एदं समुद्दघरं । [ एतु भवान्। इदं समुद्रगृहम् । ]

**राजा**—( साशङ्कम् ) वयस्य ! एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते परिचारिका चन्द्रिका संनिकृष्टमागच्छति । इतस्तावदावां भित्तिगूढौ भवावः ।

**विदूषकः**—अहो, कुंभीलएहिं कामुएहिं च परिहरणीआ खु चंदिआ। [ अहो, कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका । ]

( उभे यथोक्तं कुरुतः )

**राजा**—गौतम ! कथं नु ते सखी मां प्रतिपालयति ? । एहि, एनां गवाक्षमाश्रित्य विलोकयामि ।

**विदूषकः**—तह । [ तथा । ]

( उभौ विलोकयन्तौ तिष्ठतः )

( ततः प्रविशति मालविका बकुलावलिका च )

**बकुलावलिका**—सहि ! पणम भट्टारं । [ सखि ! प्रणम भर्तारम् । ]

---

क्रियतामिति ॥ तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयतीत्यहं संदिष्ट इति । ततो युज्यत इति तयैवं संपादितोऽर्थः ॥ **नहि बुद्धीत्यादि** । स्पष्टोऽर्थः ॥ त्वरतां भवान् । समुद्रगृहे सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि ॥ एतु भवान्। इदं समुद्रगृहम् ॥ 'अहो' इत्यामन्त्रणे। कुम्भीलकैः कामुकैश्च परिहरणीया खलु चन्द्रिका ॥ तथा ॥ सखि ! प्रणम भर्तारम् ॥ नमस्ते ॥ सखि !

**पाठा०–१ इरावदीए चित्तं–टीका०.**

**मालविका**—णमो दे । [ नमस्ते । ]

**राजा**—शङ्के मे प्रतिकृतिं निर्दिशति ।

**मालविका**—( सहर्षं द्वारमवलोक्य ) हला ! मं विप्पलंभेसि । [सखि ! मां विप्रलम्भयसि । ]

**राजा**—सखे ! हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ।

> **सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।**
> **वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥**

**बकुलावलिका**—णं एसो चित्तगदो भट्टा । [ नन्वेष चित्रगतो भर्ता । ]

**उभे**—( प्रणिपत्य ) जेदु भट्टा । [ जयतु भर्ता । ]

**मालविका**—हला ! तदा संभंमदिट्ठे[1] भट्टिणो रूवे जहा ण वितिण्हम्हि, तहा अज्जवि मए भाविदो अवितिण्हदंसणो[2] भट्टा । [ सखि ! तदा संभ्रमदृष्टे भर्तू रूपे यथा न वितृष्णास्मि, तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता । ]

**विदूषकः**—सुदं भवदा ? । तत्तहोदी चित्ते जहा दिट्ठो तहा दिट्ठो भवं त्ति मंतेदि । मुहा दाणिं मंजूसा विअ रअणभंडअं जोव्वणगव्वं वहेसि । [ श्रुतं भवता ? । तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयति । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि । ]

**राजा**—सखे ! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य,—

> **कात्स्न्र्येन निर्वर्णयितुं च रूप-**
> **मिच्छन्ति तत्पूर्वसमागमानाम् ।**
> **न च प्रियेष्वायतलोचनानां**
> **समग्रवृत्तीनि[3] विलोचनानि ॥ ८ ॥**

**मालविका**—हला ! का एसा पासपरिउत्तमुहेण[4] भट्टिणा सिणि-

---

मां विप्रलम्भयसि ॥ **सूर्योदय इत्यादि** । स्पष्टोऽर्थः ॥ नन्वेष चित्रगतो भर्ता ॥ जयतु भर्ता ॥ सखि ! तदा संभ्रमदृष्टे भर्तू रूपे यथा न वितृष्णास्मि, तथाद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता ॥ श्रुतं भवता ? । तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयति । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि ॥ **कात्स्न्र्येनेत्यादि** । स्पष्टोऽर्थः ॥ सखि ! कैषा पार्श्वपरिवृत्तमुखेन भर्त्रा स्निग्धय

---

**पाठा०–१ संमुहट्ठिदा भट्टिणो रूवदंसणेण ण तह वितिण्हम्हि. २ चित्तगतदंसणो. ३ समग्रपातीनि. ४ वअणेण.**

द्धाए दिट्ठीए णिज्झाईअदि ? । [ सखि ! कैषा पार्श्वपरिवृत्तमुखेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते ? । ]

**बकुलावलिका**—णं इअं पासगदा इरावदी । [ नन्वियं पार्श्वगतेरावती । ]

**मालविका**—सहि ! अदक्खिणो विअ भट्टा मे पडिभादि, जो सव्वं देवीजणं उज्झिअ एक्काए मुहे बद्धलक्खो । [ सखि ! अदक्षिण इव भर्ता मे प्रतिभाति, यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः । ]

**बकुलावलिका**—( आत्मगतम् ) चित्तगदं भट्टारं परमत्थदो [1]संकप्पिअ असूअदि । होदु, क्कीडिस्सं दाव एदाए । ( प्रकाशम् ) हला ! भट्टिणो वल्लहा एसा । [ चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु, क्रीडिष्यामि तावदेतया । सखि ! भर्तुर्वल्लभैषा । ]

**मालविका**—तदो किं दाणिं अत्ताणं [2]ओआसइस्सं ? । [ ततः किमिदानीमात्मानमायासयिष्यामि ? । ] ( इति सासूयं परावर्तते )

**राजा**—सखे ! पश्य,—

> भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
> सासूयमाननमितः परिवर्तयन्त्या ।
> कान्तापराधकुपितेष्वनया विनेतुः
> संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

**विदूषकः**—अणुणअसज्जो दाणिं होहि । [ अनुनयसज्ज इदानीं भव । ]

**मालविका**—अज्जगोदमो वि एत्थ एव संसेवदि णं । [ आर्यगौतमोऽप्यत्रैव संसेवत एनम् । ] ( पुनः स्थानान्तराभिमुखी भवितुमिच्छति । )

**बकुलावलिका**—( मालविकां रुद्ध्वा ) ण खु कुविदा दाणिं तुमं । [ न खलु कुपितेदानीं त्वम् । ]

---

दृष्ट्या निध्यायते ? ॥ नन्वियं पार्श्वगतेरावती ॥ सखि ! अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः ॥ चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयति । भवतु, क्रीडिष्यामि तावदेतया । सखि ! भर्तुर्वल्लभैषा ॥ ततः किमिदानीमात्मानमायासयिष्यामि ? ॥ **भ्रूभङ्गेत्यादि** । स्पष्टोऽर्थः ॥ अनुनयसज्ज इदानीं भव ॥ आर्यगौतमोऽत्रैव संसेवत एनम् ॥ न खलु कुपितेदानीं

पाठा०–१ गेण्हिअ. २ आआसेमि.

**मालविका**—जइ चिरं कुविदं एव्व मं मण्णेसि, एसो पच्चाणीअदि कोवो। [यदि चिरं कुपितामेव मां मन्यसे, एष प्रत्यानीयते कोपः।]

**राजा**—(उपेत्य)

कुप्यसि कुवलयनयने! चित्रार्पितचेष्टया किमेतन्मे।
ननु तव साक्षादयमहमनन्यसाधारणो दासः॥ १०॥

**बकुलावलिका**—जेदु जेदु भट्टा। [जयतु जयतु भर्ता।]

**मालविका**—(आत्मगतम्) कहं चित्तगदो भट्टा मए असूइदो?। [कथं चित्रगतो भर्ता मयासूयितः?।] (प्रकाशं, सव्रीडवदनमञ्जलिं करोति)

(राजा मदनकातर्यं रूपयति)

**विदूषकः**—किं भवं उदासीणो विअ दीसइ?। [किं भवानुदासीन इव दृश्यते?।]

**राजा**—अविश्वसनीयत्वात्सख्यास्तव।

**विदूषकः**—अत्तहोदीए [1]अअं कहं तुह अविस्सासो?। [अत्रभवत्यामयं कथं तवाविश्वासः?।]

**राजा**—श्रूयताम्,—

पथि नयनयोः स्थित्वा स्वप्ने तिरोभवति क्षणा-
त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव।
मनसिजरुजा क्लिष्टस्यैवं समागममायया
कथमिव सखे! विस्रब्धं स्यादिमां प्रति मे मनः?॥ ११॥

**बकुलावलिका**—सहि! बहुसो खु भट्टा विप्पलद्धो। दाणिं दाव तुए अत्ता विस्सासणिज्जो करीअदु। [सखि! बहुशः किल भर्ता विप्रलब्धः। तत्त्वयात्मा विश्वसनीयः क्रियताम्।]

**मालविका**—सहि! मह उण मंदभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लहो आसि। [सखि! मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत्।]

---

त्वम्॥ यदि चिरं कुपितामेव मां मन्यसे, एष प्रत्यानीयते कोपः॥ **कुप्यसीत्यादि**। स्पष्टोऽर्थः॥ जयतु जयतु भर्ता॥ कथं चित्रगतो भर्ता मयाऽसूयितः?॥ किं भवानुदासीन इव दृश्यते?॥ अत्रभवत्यामयं कथं तवाविश्वासः?। अस्मिन्वाक्ये काकुरनुसंधेया॥ **पथि नयनयोरित्यादि**। स्पष्टोऽर्थः॥ सखि! बहुशः किल भर्ता विप्रलब्धः। तत्त्वयात्मा विश्वसनीयः क्रियताम्॥ सखि! मम पुनर्मन्दभाग्यायाः स्वप्न-

पाठा०–१ अअं तुह अविस्सासो. २ ता तुए–टीका०.

**बकुलावलिका**—भट्टा कहेदु से उत्तरं । [भर्ता कथयत्वस्या उत्तरम् ।]

**राजा**—

उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२ ॥

**बकुलावलिका**—अणुगहीदम्ह । [अनुगृहीते स्वः ।]

**विदूषकः**—(परिक्रम्य, ससंभ्रमम्) बउलावलिए! एसो बालासोअरुक्खस्स पल्लवाइं लंघेदि हरिणो। एहि णिवारेम णं। [बकुलावलिके! एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि निवारयाम एनम् ।]

**बकुलावलिका**—तह । [तथा ।] (इति प्रस्थिता)

**राजा**—वयस्य! एवमेवास्मिन्रक्षणक्षणेऽवहितेन त्वया भवितव्यम् ।

**विदूषकः**—एवं वि गोदमो संदिसेअदि । [एवमपि गौतमः संदिश्यते ।]

**बकुलावलिका**—(परिक्रम्य) अज्ज गोदम! अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । [आर्य गौतम! अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।]

**विदूषकः**—जुज्जइ । [युज्यते ।]

(निष्क्रान्ता बकुलावलिका)

**विदूषकः**—इमं दाव फलिहक्खंभं[3] अस्सिदो होमि । (इति तथा कृत्वा) अहो, सुहप्परिसदा सिलाविसेसस्स । [इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि । अहो, सुखस्पर्शता शिलाविशेषस्य ।] (इति निद्रायते)

(मालविका ससाध्वसा तिष्ठति)

**राजा**—

विसृज सुन्दरि! संगमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।

---

समागमोऽपि भर्तुर्दुर्लभ आसीत् ॥ भर्ता कथयत्वस्या उत्तरम् ॥ **उत्तरेणेत्यादि** । स्पष्टोऽर्थः ॥ अनुगृहीतास्मि ॥ बकुलावलिके! एष बालाशोकवृक्षस्य पल्लवानि लङ्घयति हरिणः । एहि निवारयाम एनम् ॥ तथा ॥ एवमपि गौतमः संदिश्यते ॥ आर्य गौतम! अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ॥ युज्यते ॥ इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि । अहो, सुखस्पर्शता शिलाविशेषस्य ॥ **विसृजेत्यादि** ।

पाठा०–१ त्थलं.

परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ १३ ॥

**मालविका**—देवीए भएण अत्तणो वि पिअं कादुं ण पारेमि। [ देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि । ]

**राजा**—अयि ! न भेतव्यम् ।

**मालविका**—( सोपालम्भम् ) जो ण भाअदि सो मए भट्टिणी-दंसणे दिट्ठसामत्थो भट्टा । [ यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता । ]

**राजा**—

दाक्षिण्यं नाम बिम्बोष्ठि ! नायकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ! ये प्राणास्ते त्वदाशानिबन्धनाः ॥ १४ ॥

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । ( इति संश्लेषमुपजनयति )

( मालविका नाट्येन परिहरति )

**राजा**—( आत्मगतम् ) रमणीयः खलु नवाङ्गनानां मदनविषय-व्यापारः । तथा हि इयम्,—

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

( ततः प्रविशतीरावती निपुणिका च )

**इरावती**—हञ्जे णिउणिए ! सच्चं तुमं परीगदत्था चंदिआए । समुद्दघरअलिंदे सइदो एआई अज्जगोदमो दिट्ठो त्ति । [ हञ्जे निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दे शयित एकाकी आर्यगौतमो दृष्ट इति । ]

**निपुणिका**—अण्णहा कहं भट्टिणीए विण्णावेमि ? । [ अन्यथा कथं भट्टिन्यै विज्ञापयामि ? । ]

---

स्पष्टोऽर्थः ॥ देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि ॥ यो न बिभेति, स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ॥ **दाक्षिण्यमिति** । स्पष्टोऽर्थः । नायकास्तद्वंश्या राजानः ॥ **हस्तमित्यादि** । स्पष्टोऽर्थः । हञ्जे निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहालिन्दशयित एकाकी आर्यगौतमो दृष्ट इति ॥ अन्यथा कथं भट्टिन्यै विज्ञापयामि ? ॥ तेन हि तत्रैव गच्छामः संश-

पाठा०–१ बैम्बिकानां.

**इरावती**—तेण हि तहिं एव्व गच्छम्ह संसआदो मुत्तं अज्जउत्तस्स पिअवअस्सं पुच्छिदुं अ। [ तेन हि तत्रैव गच्छामः संशयान्मुक्तमार्यस्य प्रियवयस्यं प्रष्टुं च। ]

**निपुणिका**—सावसेसं विअ भट्टिणीए वअणं। [ सावशेषमिव भट्टिन्या वचनम्। ]

**इरावती**—अण्णं च चित्तगदं अज्जउत्तं पसादेदुं। [ अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम्। ]

**निपुणिका**—अह दाणिं कहं णु एव्वं अणुणीअदि ?। [ अथेदानीं कथं नु भर्तैवमनुनीयते ?। ]

**इरावती**—मुद्धे! जारिसो चित्तगदो णं तारिसो एव्व अण्णसंकंतहिअओ अज्जउत्तो। केवलं उवआरादिक्कमं पमज्जिदुं अअं आरंभो। [ मुग्धे! यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः। ]

**निपुणिका**—इदो इदो भट्टिणी। [ इत इतो भट्टिनी। ]

( उभे परिक्रामतः )

( प्रविश्य )

**चेटी**—जेदु जेदु भट्टिणी। भट्टिणि! देवी भणादि—ण मे मच्छरस्स एसो कालो। तेण खु बहुमाणं वड्ढेदुं वअस्साए सह णिअलबंधणे किदा मालविआ। जइ अणुमण्णासि अज्जउत्तस्स पिअं कादुं, तहा करेमि। जं तुह इच्छिअं तं मे भणाहि त्ति। [ जयतु जयतु भट्टिनी। भट्टिनि! देवी भणति—न मे मत्सरस्यैष कालः। तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका। यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं, तथा करोमि। यत्तवेष्टं तन्मे भणेति। ]

**इरावती**—णाअरिए! विण्णावेहि देवीं—का वअं भट्टिणीं णिओजेदुं ?। परिअणणिग्गहेण दंसिदो मइ अणुग्गहो। कस्स वा

यान्मुक्तं प्रियवयस्यं प्रष्टुं च॥ सावशेषमिव भट्टिन्या वचनम्॥ अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम्॥ अथेदानीं कथं नु भर्तैवमनुनीयते ?॥ मुग्धे! यादृशश्चित्रगतो ननु तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः॥ इत इतो भट्टिनी॥ जयतु जयतु भट्टिनी। भट्टिनि! देवी भणति—न मे मत्सरस्यैष कालः। तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका। यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि। यत्तवेष्टं

पसादेण अअं जणो वड्ढदि त्ति । [नागरिके! विज्ञापय देवीम्—का वयं भट्टिनीं नियोजयितुम्। परिजननिग्रहेण दर्शितो मय्यनुग्रहः। कस्य वा प्रसादेनायं जनो वर्धत इति ।]

**चेटी**—तह । [तथा ।] (इति निष्क्रान्ता)

**निपुणिका**—(परिक्रम्यावलोक्य च) भट्टिणि! एसो दुवारुद्देसे समुद्दघरस्स विपणिगदो विअ बलीवद्दो अज्जगोदमो आसीणो एव्व णिद्दाअदि । [भट्टिनि! एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते ।]

**इरावती**—अच्चाहिदं; ण खु सावसेसो विसविआरो हवे । [अत्याहितम्; न खलु सावशेषो विषविकारो भवेत् ।]

**निपुणिका**—पसण्णमुहवण्णो दीसइ । अवि अ धुवसिद्धिणा चिइच्छिदो । ता से असंकणिज्जं पावं । [प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् ।]

**विदूषकः**—(उत्स्वप्नायते) भोदि मालविए! । [भवति मालविके! ।]

**निपुणिका**—सुदं भट्टिणीए,—कस्स एसो अंत्तणिओअसंपादणे विस्ससणिज्जो हदासो? । सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छिं पूरिअ संपदं मालविअं उस्सिविणावेदि । [श्रुतं भट्टिन्या,—कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः? । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकामुत्स्वप्नायते ।]

**विदूषकः**—इरावदिं अदिक्कमंती होहि । [इरावतीमतिक्रामन्ती भव ।]

---

तन्मे भणेति ॥ नागरिके! विज्ञापय देवीम् । का वयं भट्टिणीं नियोजयितुम्?। परिजननिग्रहेण दर्शितो मय्यनुग्रहः । कस्य वा प्रसादेनायं जनो वर्धत इति ॥ तथा ॥ भट्टिनि! एष द्वारोद्देशे समुद्रगृहस्य विपणिगत इव बलीवर्द आर्यगौतम आसीन एव निद्रायते॥ अत्याहितम्; अत्याहितं नाम जीवानपेक्षि कर्म। 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरसिंहः । न खलु सावशेषो विषविकारो भवेत् ॥ प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् । भवति मालविके! ॥ श्रुतं भट्टिन्या,—कस्यैष आत्मनियोगसंपादने विश्वसनीयो हताशः? । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा सांप्रतं मालविकामुत्स्वप्नायते । अत्र दोषोद्घाटनादपवादो नाम संध्यङ्गमुक्तं भवति । तत्रैव रोषभाषणात्संफेटो नाम संध्यङ्गमुक्तं भवति ॥ इरावतीमविक्रामन्ती

---

**पाठा०-१** अत्तणीणो हदासो किदवो.

**निपुणिका**—एदं अच्चाहिदं; इमं भुअंगभीरुअं बम्हबंधुं इमिण भुअंगकुडिलेण दंडकट्ठेण खंभंतरिदा भाअइस्सं। [एतदत्याहितम्, इमं भुजंगभीरुकं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि।]

**इरावती**—अरुहदि एव्व किदग्घो उवद्दवस्स। [अर्हत्येव कृतघ्न उपद्रवस्य।]

(निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति।)

**विदूषकः**—(सहसा प्रबुध्य) अविहा अविहा; भो वअस्स! सप्पो मे उवरि पडिदो। [अविधा अविधा; भो वयस्य! सर्पो म उपरि पतितः।]

**राजा**—(सहसोपसृत्य) सखे! न भेतव्यं न भेतव्यम्।

**मालविका**—(अनुसृत्य) भट्टा! मा दाव सहसा णिक्कम। सप्पो त्ति भणीअदि। [भर्तः! मा तावत्सहसा निष्क्राम। सर्प इति भण्यते।]

**इरावती**—हद्धि हद्धि; भट्टा इदो एव्व धावदि। [हा धिक् हा धिक्; भर्ता इत एव धावति।]

**विदूषकः**—(सप्रहासम्) कहं दंडकट्ठं एदं। अहं उण जाणे जं मए केदईकंटएहिं दंसं करिअ सप्पस्स उवरि[1] अअसो किदं, तं मे फलिदं त्ति। [कथं दण्डकाष्ठमेतत्। अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतम्, तन्मे फलितमिति।]

(प्रविश्य पटाक्षेपेण)

**बकुलावलिका**—मा दाव भट्टा पविसदु। इह कुडिलगई सप्पो विअ दीसदि। [मा तावद्भर्ता प्रविशतु। इह कुटिलगतिः सर्प इव दृश्यते।]

**इरावती**—(स्तम्भान्तरिता राजानं सहसोपेत्य) अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स? [अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य?]

---

भव॥ एतदत्याहितम्। इमं भुजंगभीरुं ब्रह्मबन्धुमनेन भुजंगकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भीषयिष्यामि॥ अर्हत्येव कृतघ्न उपद्रवस्य। 'उवद्दवस्स' इत्यत्र क्वचित् 'असादिः' इति प्राकृते कर्मणि षष्ठी॥ अविधा अविधा; भो वयस्य! सर्पो म उपरि पतितः। अत्रोद्वेजनाद्युक्तिर्नाम संध्यङ्गमुक्तं भवति॥ भर्तः! मा तावत्सहसा निष्क्राम। सर्प इति भण्यते॥ हा धिक् हा धिक्; भर्ता इत एव धावति॥ कथं दण्डकाष्ठमेतत्। अहं पुनर्जाने यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतम्, तन्

---

पाठा०—१ विअ दंसो किदो, तं.

( सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः )

**राजा**—प्रिये ! अपूर्वोऽयमुपचारः ।

**इरावती**—बकुलावलिए ! दिट्ठिआ दुच्चाहिआरविसआ संपुण्णा दे पइण्णा ? । [ बकुलावलिके ! दिष्ट्या दूत्यभिसारविषया संपूर्णा ते प्रतिज्ञा । ]

**बकुलावलिका**—पसीददु भट्टिणी । किं मए किदंत्ति देवो पुच्छिदव्वो । दद्दुरा वाहरंतित्ति किं देवो पुहवीए वरिसिदुं विरमदि ? । [ प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति ? । ]

**विदूषकः**—मा दाव, भोदीए दंसणमत्तेण अत्तभवं पणिवादलंघणं विसुमरिदो । तुमं उण अज्जवि पसादं ण गेण्हसि ? । [ मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि ? । ]

**इरावती**—कुविदा दाणिं अहं किं करिस्सं ? । [ कुपितेदानीमहं किं करिष्यामि ? । ]

**राजा**—एवमेतत्, अस्थाने कोप इत्यनुपपन्नं त्वयि । तथा हि

> कदा मुखं वरतनु ! कारणादृते
> तवागतं क्षणमपि कोपपात्रताम् ।
> अपर्वणि ग्रहकलुषेन्दुमण्डला
> विभावरी कथय कथं भविष्यति ॥ १६ ॥

**इरावती**—अट्ठाणे त्ति सुट्ठु वाहरिदं अज्जउत्तेण । अण्णसंकंतेसु अम्हाणं भाअहेएसु जइ उण कुप्पेअं, तेदो णं अहं हस्सा भवेअं । [ अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो नन्वहं हास्या भवेयम् । ]

**राजा**—त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः

---

फलितमिति ॥ मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ॥ अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ? ॥ बकुलावलिके ! दिष्ट्या दूत्यभिसारविषया संपूर्णा ते प्रतिज्ञा ॥ प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं विरमति ? ॥ मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि ? ॥ कुपितेदानीमहं किं करिष्यामि ? ॥ **कदेति** । स्पष्टोऽर्थः ॥ अस्थान इति सुष्ठु व्याहृतमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयम्, ततो नन्वहं

---

पाठा०–१ दूत्यधिकार. २ जदि उण कुप्पेअं.

**नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धंम्[1]।**
**इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १७ ॥**

**इरावती**—णिउणिए! गच्छ। देवीं विण्णावेहि। दिट्ठो भवदीए पक्खवादो णं अज्ज त्ति। [निपुणिके! गच्छ। देवीं विज्ञापय। दृष्टो भवत्याः पक्षपातो नन्वद्येति।]

**निपुणिका**—तह। [तथा।] (इति निष्क्रान्ता)

**विदूषकः**—(आत्मगतम्) अहो, अणत्थो संपडिदो। बंधणब्भट्टो गिहकवोदो बिडालिआए[2] आलोए पडिदो। [अहो, अनर्थः संपतितः। बन्धनभ्रष्टो गृहकपोतो बिडालिकाया आलोके पतितः।]

**निपुणिका**—(प्रविश्यापवार्य) भट्टिणि! जदिच्छादिट्ठाए माहविआए आचक्खिदं—एव्वं खु एदं णिव्वुत्तं त्ति। [भट्टिनि! यदृच्छादृष्टया माधविकयाख्यातम्—एवं खल्वेतन्निर्वृत्तमिति।] (इति कर्णे कथयति)

**इरावती**—(आत्मगतम्) उववण्णं; सच्चं अअं एत्थ बम्हबंधुणा किदो पओओ। (विदूषकं विलोक्य) इअं इमस्स कामतंतसचिवस्स णीदी। [उपपन्नम्; सत्यमयमत्र ब्रह्मबन्धुना[1] कृतः प्रयोगः। इयमस्य कामतन्त्रसचिवस्य नीतिः।]

**विदूषकः**—भोदि! जदि णीदिगदं एक्कं वि अक्खरं [3]पढेअं, तदो गाअत्तिं वि विसुमरेअं। [भवति! यदि नीतिगतमेकमप्यक्षरं पठेयम्, ननु ततो गायत्रीमपि विस्मरेयम्।]

**राजा**—(आत्मगतम्) कथं नु खल्वस्मात्संकटादात्मानं मोचयिष्यामि?।

(प्रविश्य)

**जयसेना**—(सावेगम्) देव! कुमारी वसुलच्छी कंदुअं अणुधावंदी पिंगलवाणरेण बलिअं तासिदा अंकणिसण्णा देवीए पवादकिसलअं विअ वेवमाणा ण किंवि पकिदिं पडिवज्जइ। [देव! कुमारी वसुलक्ष्मीः

हास्या भवेयम्॥ **नार्हतीत्यादि**। स्पष्टोऽर्थः॥ निपुणिके! गच्छ। देवीं विज्ञापय। दृष्टो भवत्याः पक्षपातो नन्वद्येति॥ तथा॥ अहो, अनर्थः संपतितः। बन्धनभ्रष्टो गृहकपोतः पारावतो बिडालिकाया आलोके पतितः॥ भट्टिनि! यदृच्छादृष्टया माधविकयाख्यातम्—एवं खल्वेतन्निर्वृत्तमिति॥ उपपन्नम्; सत्यमयमत्र ब्रह्मबन्धुना कृतः प्रयोगः। इयमस्य कामतन्त्रसचिवस्य नीतिः॥ भवति! यदि नीतिगतमेकमप्यक्षरं पठेयम्, ननु मयात्रभवान्प्रेषितो भवेत्॥ देव! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव

पाठा०—१ बन्द्धुम्. २ चिल्लाए मुहे. ३ णं मए अत्तभवं पेसिदो—टीका०.

टिप्प०—1 'ब्रह्मबन्धु'शब्दोऽत्र निन्दाव्यञ्जकः, यथा 'भट्टरगा' इति दाक्षिणात्येषु प्रयोगः।

कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिताङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते ।]

**राजा**—कष्टं कष्टम्, कातरो बालभावः ।

**इरावती**—(सावेगम्) तुवरदु अज्जउत्तो णं समस्सासइदुं । मा से संतासजणिदो विआरो वड्ढदु । [त्वरतामार्यपुत्र एनां समाश्वासयितुम्। मास्याः संत्रासजनितो विकारो वर्धताम् ।]

**राजा**—अयमेनामहं संज्ञापयामि । (इति सत्वरं परिक्रामति)

**विदूषकः**—साहु रे पिंगलवाणर ! साहु; परित्तादो तुए संकटादो सपक्खो । [साधु रे पिङ्गलवानर ! साधु; परित्रातस्त्वया संकटात्स्वपक्षः ।]

(निष्क्रान्तो राजा विदूषकश्च, इरावती निपुणिका प्रतीहारी च)

**मालविका**—हला ! देविं चिंतिअ वेवदि मे हिअअं । ण जाणे अदो वरं किं वा अणुहविदव्वं हविस्सदि त्ति। [सखि ! देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वाऽनुभवितव्यं भविष्यतीति ।]

(नेपथ्ये)

अच्चरिअं अच्चरिअं; अपुण्णे एव्व पंचरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोओ। जाव देवीए णिवेदेमि । [आश्चर्यमाश्चर्यम् ; अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ।]

(उभे श्रुत्वा प्रहृष्टे)

**बकुलावलिका**—आस्ससिदु सही । सच्चप्पइण्णा देवी । [आश्वसितु सखी । सत्यप्रतिज्ञा देवी ।]

**मालविका**—तेण हि पमदवणपालिआए पिट्ठदो होम्ह । [तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः ।]

**बकुलावलिका**—तह । [तथा ।]

(इति निष्क्रान्ते)

## इति चतुर्थोऽङ्कः ।

---

वेपमाना न किंचित्प्रकृतिं प्रतिपद्यते ॥ त्वरतामार्यपुत्र एनां समाश्वासयितुम् । मास्याः संत्रासजनितो विकारो वर्धताम् ॥ साधु रे पिङ्गलवानर ! साधु । परित्रातस्त्वया संकटात्स्वपक्षः । अहमिति शेषः ॥ सखि ! देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वाऽनुभवितव्यं भविष्यतीति ॥ आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि ॥ आश्वसितु सखी । सत्यप्रतिज्ञा देवी । अत्र देव्यनुग्रहरूपकार्यसंग्रहणादादानं नाम संध्यङ्गमुक्तं भवति ॥ तेन हि प्रमदवनपालिकायाः पृष्ठतो भवावः ॥ तथा ॥ इदं मालविकाकृतमुद्यानपालिकानुसरणमुत्तराङ्कोपयुक्तत्वाद्बिन्दुरित्यनुसंधेयम् ॥

**इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने चतुर्थोऽङ्कः ॥**

## पञ्चमाङ्कस्य कथावस्तु

अस्मिन्नङ्के तावत्तपनीयाशोकस्य कृतसत्कारविधित्वं निवेदयितुकामा उद्यानपालिका 'देवी कुत्र भवेत्' इति चिन्तयन्ती पथि सारसिकं पृच्छति । तयोः संवादादिदमधिगम्यते–यद्वीरसेनप्रभृतिभिर्भर्तुर्विजयदण्डैर्विदर्भनाथो वशीकृतः, तस्य दायादो माधवसेनो मोचितश्च । तेन महासाराणि रत्नवाहनानि शिल्पकारिकाभूयिष्ठं परिजनं चोपायनीकृत्य दूतो भर्तुः सकाशं प्रेषितः श्वः किल भर्तारं पश्यतीति । ततश्च देवी धारिणी प्रतिश्रुतार्थसंपादनाय परिव्राजिकया मालविकां विवाहनेपथ्यविधानेनालंकृत्य ताभ्यां समेता प्रमदवनमयासीत् । राजानमपि तपनीयाशोकस्य कुसुमस्तबकशोभादर्शनमिषेण तत्राहूतवती । अत्रान्तरे विदर्भदेशादुपायनीकृते द्वे मदनिका–ज्योत्स्निकाख्ये शिल्पकारिके कञ्चुकिना प्रवेशिते । ते च तत्रोपस्थितां मालविकां यतिवेषधारिणीमार्यकौशिकीं च प्रत्यभिजज्ञाते । अथ ज्योत्स्निकयार्यकौशिक्या चामूलाग्रो वृत्तान्तो निवेदितो येनेयं मालविका राजकुमारी माधवसेनस्य स्वसेति चाधिगतम् । एतदन्तरे नृपपितृलेखात्सुतं वसुमित्रं लब्धविजयं श्रुत्वा सर्वेऽपि संतुष्टा अभवन् । देवी धारिणी मालविकां पारितोषिकमिषेण राज्ञे सानुनयमुपदीचकार, राजापि च तां सव्रीडमुररीचकारेति वस्तु संग्रथितम् । एवं राजानुरागगर्भितेन भरतवाक्येनेदं शुभोदर्कं नाटकमवसितवान्कवीन्द्रः कालिदासः ।

## पञ्चमोऽङ्कः

( ततः प्रविशत्युद्यानपालिका )

**उद्यानपालिका**—उवक्खित्तो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआबंधो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । ( परिक्रम्य ) अहो देव्वस्स अणुकंपणीआ मालविआ । तस्सिं तह चंडिआ देवी इमिणा असोअकुसुमवुत्तंतेण पसादसुमुही हविस्सदि । कहिं णु खु देवी हवे ? । ( विलोक्य ) अम्हो ! एसो देवीए परिअणब्भंतरो किंवि जदुमुद्दालंछिदं मंजूसं गेण्हिअ चदुस्सालादो कुज्जो सारसिओ णिक्कामदि । पुच्छिस्सं दाव णं । ( ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः ) सारसिअ ! कहिं पत्थिदोसि ? । [ उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डी देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् ? । अहो, एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसिको निष्क्रामति । प्रक्ष्यामि तावदेनम् । सारसिक ! कुत्र प्रस्थितोऽसि ? । ]

**सारसिकः**—महुअरिए ! विज्जा[1]भरिआणं बम्हणाणं णिच्चदक्खिणं मासिइं पुरोहिदस्स हत्थं पावइस्सं । [ मधुकरिके ! विद्याभरितानां ब्राह्मणानां नित्यदक्षिणां मासिकीं पुरोहितस्य हस्तं प्रापयिष्यामि । ]

**मधुकरिका**—अह किंणिमित्तं ? । [ अथ किंनिमित्तम् ? । ]

**सारसिकः**—जदप्पहुदि सेणावदिजण्णतुरंगरक्खणे णिउत्तो भट्टदारओ वसुमित्तो तदप्पहुदि तस्स आउसणिमित्तं णि[2]क्कसदसुवण्ण-

---

कविरिदानीमङ्कान्तरमारभमाणः कथासंघटनार्थं प्रथमं प्रवेशकं नामार्थोपक्षेपकं प्रस्तौति—**ततः प्रविशतीत्यादि** । उपक्षिप्तो मया कृतसत्कारविधिस्तपनीयाशोकस्य वेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो, दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डी देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । कुत्र नु खलु देवी भवेत् ? । अहो, एष देव्याः परिजनाभ्यन्तरः किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालातः कुब्जः सारसिको निष्क्रामति । प्रक्ष्यामि तावदेनम् । सारसिक ! कुत्र प्रस्थितोऽसि ?॥ मधुकरिके ! विद्याभरितानां ब्राह्मणानां नित्यदक्षिणां मासिकीं निष्कादिरूपां पुरोहितस्य हस्तं प्राप-

---

पाठा०—१ पारगामिणं. २ णिच्चदक्खिणा दादव्वा । तं अज्ज पुरोहिदस्स.

परिमाणं दक्खिणं देवी दक्खिणीएहिं परिग्गाहेदि। [ यतःप्रभृति सेनापतियज्ञतुरंगरक्षणे नियुक्तो भर्तृदारको वसुमित्रस्ततःप्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति। ]

**मधुकरिका**—अह कहिं देवी?। किं वा अणुचिट्ठदि?। [ अथ कुत्र देवी?। किं वाऽनुतिष्ठति?। ]

**सारसिकः**—मंगलघरे आसणत्था भविअ विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाइअमाणं सुणादि। [ मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकरैर्वाच्यमानं शृणोति। ]

**मधुकरिका**—को उण विदब्भराअवुत्तंतो सुणीअदि?। [ कः पुनर्विदर्भराजवृत्तान्तः श्रूयते?। ]

**सारसिकः**—वसीकिदो खु वीरसेणप्पमुहेहिं भत्तुणो विजअदंडेहिं विदब्भणाहो। मोइदो से दाआदो माहवसेणो। दूदो अ तेण महासाराणि रअणाणि वाहणाणि सिप्पआरिआभूइट्ठं परिअणं उवाअणीकरिअ भट्टिणोसआसं पेसिदो त्ति। [ वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः। मोचितोऽस्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति। ]

**मधुकरिका**—गच्छ, अणुचिट्ठ अत्तणो णिओअं। अहं वि देविं पेक्खिस्सं। [ गच्छानुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये।

( इति निष्क्रान्तौ )

**इति प्रवेशकः।**

---

यिष्यामि॥ अथ किंनिमित्तम्?॥ यतःप्रभृति सेनापतियज्ञतुरंगरक्षणे नियुक्तो भर्तृदारको वसुमित्रः, ततःप्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति। दक्षिणीयो दक्षिणार्हः। 'कडङ्करदक्षिणाच्छ च' (पा. ५।१।६९) इति छप्रत्ययः॥ अथ कुत्र देवी?। किं वानुतिष्ठति?॥ मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकरैर्वाच्यमानं शृणोति॥ कः पुनर्विदर्भराजवृत्तान्तः श्रूयते?॥ वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः। मोचितोऽस्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिकाभूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति॥ गच्छानुतिष्ठात्मनो

पाठा०—१ अट्ठादससुवण्ण. २ सुवो किल भट्टारअं देक्खिसदि त्ति.

( ततः प्रविशति प्रतीहारी )

**प्रतीहारी**—आणत्तम्हि असोअसक्कारवावुदाए देवीए, विण्णावेहि अज्जउत्तं—इच्छम्मि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुं त्ति । ता जाव धम्मासणगदं देवं पडिवालेमि । [आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या, विज्ञापयार्यपुत्रम्—इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि ।] ( इति परिक्रामति )

( नेपथ्ये वैतालिकौ )

**प्रथमः**—विजयतां विजयतां देवः । दिष्ट्या दण्डैरेव रिपुशिरःसु वर्तते देवः ।

**परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं**
**नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।**
**विजयकरिणामालानत्वं गतैः प्रबलस्य ते**
**वरद ! वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥**

**द्वितीयः**—

**विरचितपदं वीरप्रीत्या सुरोपम ! सूरिभि-**
**श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।**
**तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं**
**परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥ २ ॥**

**प्रतीहारी**—एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव आअच्छदि । अहं वि दाव इमस्स पमुहादो लोआदो ओसरिअ खंभंतरिदा होमि । [एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि ।] ( इत्येकान्ते स्थिता )

---

नियोगम् । अहमपि देवीं प्रेक्षिष्ये ॥ **ततः प्रविशतीत्यादि** । आज्ञप्तास्म्यशोकसत्कारव्यापृतया देव्या । विज्ञापयार्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि ॥ **परभृतेत्यादि** । स्पष्टोऽर्थः ॥ **विरचितेति** । क्रथकैशिकान्विदर्भदेशान्मध्येकृत्य । आक्रम्येत्यर्थः । 'मध्येपदेनिवचने च' (पा. १।४।७६) इति गतिसंज्ञा । 'कुगतिप्रादयः' (पा. २।२।१८) इति समासः । 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा. ७।१।३७) शेषं स्पष्टम् ॥ एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति ।

---

पाठा०-१ शौरेः

( प्रविश्य सवयस्यः )

**राजा—**

कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥ ३ ॥

**विदूषकः**—जह अहं पेक्खामि तह एक्कंतसुहिदो भवं हविस्सदि । [ यथाऽहं प्रेक्ष्ये तथा एकान्तसुखितो भवान्भविष्यति । ]

**राजा**—कथमिव ? ।

**विदूषकः**—अज्ज किल देवीए एव्वं पंडितकोसिई भणिदा—भअवदि ! जं तुमं पसाहणगव्वं वहसि, तं दंसेहि मालविआए सरीरे विवाहणेवत्थं ति । ताए सविसेसालंकिदा मालविआ । तत्तहोदी कदावि पूरए भवदोवि मणोरहं । [ अद्य किल देव्यैवं पण्डितकौशिकी भणिता-भगवति ! यत्त्वं प्रसाधनगर्वं वहसि तद्दर्शय मालविकायाः शरीरे विवाहनेपथ्यमिति । तया सविशेषालंकृता मालविका तत्रभवती कदाचित्पूरयेद्भवतोऽपि मनोरथम् । ]

**राजा**—सखे ! मदपेक्षानुवृत्त्या निवृत्तेर्ष्याया धारिण्याः पूर्वाचरितैः संभाव्यत एवैतत् ।

**प्रतीहारी**—( उपगम्य ) जेदु जेदु भट्टा । देवी विण्णावेदि–तवणीआसोअस्स कुसुमसोहग्गदंसणेण मह आरम्भो सफलो करीअदु त्ति । [ जयतु जयतु भर्ता । देवी विज्ञापयति–तपनीयाशोकस्य कुसुमसौभाग्यदर्शनेन ममारम्भः सफलः क्रियतामिति । ]

**राजा**—ननु तत्रैव देवी तिष्ठति ।

---

अहमपि तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि ॥ **कान्तां विचिन्त्येत्यादि** । सुलभेतरसंप्रयोगामसुलभसमागमाम् । दुःखायते 'सुखादिभ्यः कर्तृवेदनायाम्' (पा. ३।१।१८) इति क्यच् । अत्र मालविकारूपबीजानुसंधानात्संधिर्नाम निर्वहणसंध्यङ्गमुक्तं भवति ॥ यदाहं प्रेक्ष्ये तथा एकान्तसुखितो भवान्भविष्यति ॥ 'कथमिव' इति प्रश्ने । अत्र कार्यान्वेषणाद्विरोधो नाम संध्यङ्गमुक्तं भवति ॥ अद्य किल देव्यैवं पण्डितकौशिकी भणिता—भगवति ! यत्त्वं प्रसाधनगर्वं वहसि, तद्दर्शय मालविकायाः शरीरे विवाहनेपथ्यमिति । तया सविशेषालंकृता मालविका तत्रभवती धारिणी कदाचित्पूरयेद्भवतोऽपि मनोरथम् । अत्र कार्योपदर्शनात्पूर्वभाव इति संध्यङ्गमुक्तं भवति ॥ जयतु जयतु भर्ता । देवी विज्ञापयति–तपनीयाशोकस्य कुसुमसौभाग्य-

**प्रतीहारी**—अह इं । जहरिहसंमाणसुहिअं अंतेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिवालेदि । [अथ किम् । यथार्हसंमानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ।]

**राजा**—( सहर्षं विदूषकं विलोक्य ) जयसेने ! गच्छाग्रतः ।

**प्रतीहारी**—एदु एदु देवो । [एत्वेतु देवः ।] ( इति परिक्रामति )

**विदूषकः**—( विलोक्य ) भो वअस्स ! किंवि परिवुत्तजोव्वणो विअ वसंतो पमदवणो लक्खीअदि । [भो वयस्य ! किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।]

**राजा**—यथाह भवान् ।

**अग्रे विकीर्णकुरवकफलजालकभिद्यमानसहकारम् ।**
**परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥**

**विदूषकः**—( परिक्रम्य ) अहो अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ; ओलोअदु भवं । [अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः; अवलोकयतु भवान् ।]

**राजा**—स्थाने खलु प्रसवमन्थरोऽयमभूत् । यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य,—

**सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।**
**निर्वृत्तदोहदेऽस्मिन्संक्रान्तानीव कुसुमानि ॥ ५ ॥**

**विदूषकः**—तह; भो ! वीसद्धो होहि । अम्हेसु संणिहिदेसु वि धारिणी पासपरिवट्टिणीं मालविअं अणुमण्णेदि । [तथा; भोः ! विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ।]

**राजा**—( सहर्षम् ) सखे ! पश्य,—

**मामियमभ्युत्तिष्ठति देवी विनयादुपस्थिता प्रियया ।**
**विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥**

---

दर्शनेन समारम्भः सफलः क्रियतामिति ॥ अथ किम् । यथार्हसंमानसुखितमन्तःपुरमवरोधजनं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ॥ एत्वेतु देवः ॥ भो वयस्य ! किंचित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ॥ **अग्रे विकीर्णकुरवकेत्यादि** । स्पष्टोऽर्थः ॥ अहो, अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । अवलोकतां भवान् ॥ **सर्वाशोकतरूणामित्यादि** । स्पष्टोऽर्थः ॥ तथा । भोः, विस्रब्धो भव । अस्मासु संनिहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ॥ **मामियमिति** । स्पष्टोऽर्थः ॥ जानामि निमित्तं कौतुकालंका-

---

**पाठा०—१ विस्तृत.**

( ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः )

**मालविका**—( आत्मगतम् ) जाणामि णिमित्तं कोदुआलंकारस्स। तह वि मे हिअअं बिसिणीपत्तगदं विअ सलिलं वेवदि। अवि अ दक्खिणेदरं वि मे णअणं बहुसो फुरदि। [ जानामि निमित्तं कौतुकालंकारस्य। तथापि मे हृदयं विसिनीपत्रगतमिव सलिलं वेपते। अपि च दक्षिणेतरमपि मे नयनं बहुशः स्फुरति। ]

**विदूषकः**—भो वअस्स! विवाहणेवत्थेण सविसेसं खु सोहदि मालविआ। [ भो वयस्य! विवाहनेपथ्येन सविशेषं खलु शोभते मालविका। ]

**राजा**—पश्याम्येनाम्। यैषा,—

> अनतिलम्बिदुकूलनिवासिनी
> बहुभिराभरणैः प्रतिभाति मे।
> उडुगणैरुदयोन्मुखचन्द्रिका
> हतहिमैरिव चैत्रविभावरी ॥ ७ ॥

**धारिणी**—( उपेत्य ) जेदु जेदु अज्जउत्तो। [ जयतु जयत्वार्यपुत्रः। ]

**विदूषकः**—वड्ढदु भोदी। [ वर्धतां भवती। ]

**परिव्राजिका**—विजयतां देवः।

**राजा**—भगवति! अभिवादये।

**परिव्राजिका**—अभिप्रेतसिद्धिरस्तु।

**देवी**—( सस्मितम्। ) अज्जउत्त! एस ते अम्हेहिं तरुणीजणसहाअस्स असोओ संकेदघरो कप्पिदो। [ आर्यपुत्र! एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः। ]

**विदूषकः**—भो! आराहिओसि। [ भोः! आराधितोऽसि। ]

**राजा**—( सव्रीडमशोकमभितः परिक्रामन् )

> नायं देव्या भाजनत्वं न नेयः
> सत्काराणामीदृशानामशोकः।
> यः सावज्ञो माधवश्रीनियोगे
> पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

---

रस्य। तथापि मे हृदयं विसिनीपत्रगतमिव सलिलं वेपते। अपि च दक्षिणेतरमपि मे नयनं बहुशः स्फुरति॥ भो वयस्य! विवाहनेपथ्येन सविशेषं खलु शोभते मालविका॥ **अनतिलम्बीत्यादि**। स्पष्टोऽर्थः॥ जयतु जयत्वार्यपुत्रः॥ वर्धतां भवती॥ आर्यपुत्र! एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः॥ भोः! आराधितोऽसि॥ **नायं देव्या इत्यादि**। स्पष्टोऽर्थः॥ भोः! विस्रब्धो भूत्वा त्वं यौवन-

**विदूषकः**—भो! वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख। [भोः! विस्रब्धो भूत्वा त्वं यौवनवतीमिमां पश्य।]

**देवी**—कं? । [काम्?।]

**विदूषकः**—भोदि! तवणीआसोअस्स कुसुमसोहं। [भवति! तपनीयाशोकस्य कुसुमशोभाम्।]

(सर्वे उपविशन्ति)

**राजा**—(मालविकां विलोक्य, आत्मगतम्) कष्टः खलु संनिधिवियोगः।

**अहं रथाङ्गनामेव प्रिया सहचरीव मे।**
**अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥**

(प्रविश्य)

**कञ्चुकी**—विजयतां देवः। देव! अमात्यो विज्ञापयति—विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते। संप्रति देवोपस्थानयोग्ये संवृत्ते। तदाज्ञां देवो दातुमर्हतीति।

**राजा**—प्रवेशय ते।

**कञ्चुकी**—यदाज्ञापयति देवः। (इति निष्क्रम्य ताभ्यां सह प्रविश्य) इत इतो भवत्यौ।

**प्रथमा**—(जनान्तिकम्) हला मदणिए! अपुव्वं वि इमं राअउलं पविसंतीए पसीददि मे हिअअं। [सखि मदनिके! अपूर्वमपीदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम्।]

**द्वितीया**—जोसिणीए! अत्थि खु लोअप्पवादो—आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदि त्ति। [ज्योत्स्निके! अस्ति खलु लोकप्रवादः—आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति।]

**प्रथमा**—सो सच्चो दाणिं होदु। [स सत्य इदानीं भवतु।]

**कञ्चुकी**—एष देव्या सह देवस्तिष्ठति। उपसर्पतां भवत्यौ।

---

वतीमिमां पश्य ॥ काम्? ॥ भवति! तपनीयाशोकस्य कुसुमशोभाम् ॥ **अहं रथाङ्गेत्यादि।** स्पष्टोऽर्थः ॥ सखि मदनिके! अपूर्वमिमं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् ॥ ज्योत्स्निके! अस्ति खलु लोकप्रवादः—आगामि सुखं दुःखं वा हृदयसमवस्था कथयतीति ॥ स सत्य इदानीं भवतु ॥ जयतु जयतु भर्ता। जयतु जयतु भट्टिनी ॥

माल

( उभे उपसर्पतः )

( मालविका परिव्राजिका च चेट्यौ विलोक्य परस्परमवलोकयतः )

**उभे**—( प्रणिपत्य ) जेदु जेदु भट्टा । जेदु जेदु भट्टिणी । [ जयतु जयतु भर्ता । जयतु जयतु भट्टिनी । ]

( उभे राजाज्ञया उपविष्टे )

**राजा**—कस्यां कलायामभिविनीते भवत्यौ ? ।

**उभे**— भट्टा ! संगीदए अब्भंतरे म्ह । [ भर्तः ! संगीतकेऽभ्यन्तरे स्वः । ]

**राजा**—देवि ! गृह्यतामनयोरन्यतरा ।

**देवी**—मालविए ! इदो पेक्ख । कदरा दे संगीदसहआरिणी रुच्चदि ? । [ मालविके ! इतः पश्य । कतरा ते संगीतसहकारिणी रोचते ? । ]

**उभे**—( मालविकां दृष्ट्वा )अम्हो भट्टदारिआ । जेदु जेदु भट्टदारिआ । [ अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका । ] ( इति प्रगम्य तया सह बाष्पं विसृजतः )

( सर्वे सविस्मयमवलोकयन्ति )

**राजा**—के भवत्यौ ? । का वेयम् ? ।

**उभे**—भट्टा ! एसा अम्हाणं भट्टदारिआ । [ भर्तः ! एषास्माकं भर्तृदारिका । ]

**राजा**—कथमिव ? ।

**उभे**—सुणादु भट्टा । जो सो भट्टिणा विजअदंडेहिं विदब्भणाहं वसीकरिअ बंधणादो मोइओ कुमारो माहवसेणो णाम, तस्स इअं कणीअसी भइणी मालविआ णाम । [ श्रृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम । ]

**देवी**—कहं राअदारिआ इअं ? । चंदणं खु मए पादुओवओएण दूसिदं । [ कथं राजदारिकेयम् ? । चन्दनं खलु मया पादुकोपयोगेन दूषितम् । ]

---

भर्तः ! संगीतकेऽभ्यन्तरे स्वः ॥ मालविके ! इतः पश्य । कतरा ते संगीतसहकारिणी रोचते ? ॥ अहो भर्तृदारिका । जयतु जयतु भर्तृदारिका ॥ भर्तः ! एषास्माकं भर्तृदारिका॥ श्रृणोतु भर्ता । यः स भर्ता विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनी मालविका नाम ॥ कथं राजदारिकेयम् ? । चन्दनं खलु मया पादुकोपयोगेन दूषितम् ॥ विधिनियोगेन ॥ श्रृणोतु

**राजा**—अथात्रभवती कथमित्थंभूता ? ।

**मालविका**—( निःश्वस्यात्मगतम् ) विहिणिओएण । [विधिनियोगेन।]

**द्वितीया**—सुणादु भट्टा । दाआदवसंगदे अम्हाणं भट्टदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं अवणीदा एसा । [शृणोतु भर्ता । दायादवशंगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमपनीतैषा ॥ ]

**राजा**—श्रुतपूर्वं मयैतावत् । ततस्ततः ? ।

**द्वितीया**—भट्टा ! अदो वरं ण आणीमो । [भर्तः ! अतः परं न जानीमः । ]

**परिव्राजिका**—ततः परमहं मन्दभागिनी कथयिष्यामि ।

**उभे**—भट्टदारिए ! अज्जकोसिईए विअ सरसंजोओ । णं सा एव्व । [भर्तृदारिके ! आर्यकौशिक्या इव स्वरसंयोगः । ननु सैव । ]

**मालविका**—अह इं । [अथ किम् । ]

**उभे**—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि ! णमो दे । [यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति ! नमस्ते । ]

**परिव्राजिका**—स्वस्ति भवतीभ्याम् ।

**राजा**—कथं आप्तवर्गोऽयं भगवत्याः ? ।

**परिव्राजिका**—एवमेतत् ।

**विदूषकः**—तेण हि कहेदु भअवदी अत्तहोदीए वुत्तंतावसेसं । [तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तावशेषम् । ]

**परिव्राजिका**—( सवैक्लव्यम् ) तावच्छ्रूयताम् । माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ ।

**राजा**—उपलक्षितः । ततस्ततः ? ।

**परिव्राजिका**—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ।

**राजा**—ततस्ततः ? ।

---

भर्ता दायादवशंगते भर्तृदारिके माधवसेन तस्यामात्येनार्यसुमतिनास्मादृशं परिजनमुज्झित्वा गूढमपनीतैषा ॥ भर्तः ! अतः परं न जानामि ॥ भर्तृदारिके ! आर्यकौशिक्या इव स्वरसंयोगः । ननु सैव ॥ अथ किम् ॥ यतिवेषधारिण्यार्यकौशिकी

**परिव्राजिका**—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्गणोऽध्वश्रमार्तो विश्रमितुम् ।

**राजा**—ततस्ततः ? ।

**परिव्राजिका**—ततः किंचान्यत् ।

**तूणीरपट्टपरिणद्धभुजान्तराल-**
**माकर्णलम्बिशिखिबर्हकलापधारि ।**
**कोदण्डपाणि निनदत्प्रतिरोधकाना-**
**मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥**

( मालविका भयं रूपयति )

**विदूषकः**—भोदि ! मा भआहि । अदिक्कंतं खु तत्तहोदी कहेदि । [ भवति ! मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति । ]

**राजा**—ततस्ततः ? ।

**परिव्राजिका**—ततो मुहूर्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः ।

**राजा**—हन्त, अतः परं कष्टतरं श्रोतव्यम् ।

**परिव्राजिका**—ततः स मत्सोदर्यः

**इमां परीप्सुर्दुर्जाते पराभिभवकातराम् ।**
**भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥**

**प्रथमा**—हा, हदो सुमदी । [ अहो, हतः सुमतिः । ]

**द्वितीया**—अदो खु इअं भट्टदारिआए समवत्था संवुत्ता । [ अतः खल्वियं भर्तृदारिकायाः समवस्था संवृत्ता । ]

( परिव्राजिका बाष्पं विसृजति )

**राजा**—भगवति ! तनुभृतामीदृशी लोकयात्रा । न शोच्यस्तत्रभवान्सफलीकृतभर्तृपिण्डः । ततस्ततः ? ।

---

दुःखेन विभाव्यते । भवति ! नमस्ते ॥ तेन हि कथयतु भगवत्यत्रभवत्या वृत्तान्तं तावदशेषम् ॥ **तूणीरपट्टेत्यादि** । स्पष्टोऽर्थः ॥ भवति ! मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति ॥ **इमामित्यादि** । दुर्जाते आपदि । पराभिभवकातराम्, परेषां शत्रूणामभिभव आक्रमणं तस्मात्कातरां दुभीतामिमां मालविकां परीप्सुः, पर्याप्तुं परित्रातुमिच्छुः । 'आप्ज्ञप्यृधामीत्' ( पा. ७।४।५५ ) इतीत्वम् । 'अत्र लोपोऽभ्यासस्य' (पा. ७।४।५८) इत्यभ्यासलोपः । 'पर्याप्तिः स्यात्परित्राणं हस्तधारणमित्यपि' इत्यमरः । भर्तृप्रियः स्वामिभक्तः प्रियैरिष्टैरसुभिः प्राणैर्भर्तुरानृण्यमनृणत्वं गतः प्राप्तः ॥ अहो, हतः सुमतिः ॥ ततः खल्वियं भर्तृदारि-

पाठा०—१ वणिग्जनो विश्रमितुम्. २ बन्ध. ३ पिच्छ. ४ बद्धयुद्धास्ते.

**परिव्राजिका**—ततोऽहं मोहमुपगता यावत्संज्ञां लभे तावदियं दुर्लभदर्शना संवृत्ता ।

**राजा**—महत्खलु कृच्छ्रमनुभूतं भगवत्या ।

**परिव्राजिका**—ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्य-दुःखया मया त्वदीयं देशमवतीर्य इमे काषाये गृहीते ।

**राजा**—युक्तः सज्जनस्यैष पन्थाः । ततस्ततः ? ।

**परिव्राजिका**—तत इयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता । देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येतदवसानं कथायाः ।

**मालविका**—किं णु खु संपदं भट्टा भणादि ? । [ किं नु खलु सांप्रतं भर्ता भणति ? ।

**राजा**—अहो परिभवोपहारिणो विनिपाताः । कुतः

**प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।**
**स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ॥ १२ ॥**

**धारिणी**—भअवदि ! तुए अभिजणवदिं मालविअं अणाचक्खंतीए असंपदं किदं । [भगवति ! त्वयाभिजनवतीं मालविकामनाचक्षाण-याऽसांप्रतं कृतम् । ]

**परिव्राजिका**—शान्तं पापम् । केनचन कारणेन खलु मया नैभृत्यमवलम्बितम् ।

**देवी**—किं विअ तं कारणं ? । [ किमिव तत्कारणम् ? । ]

**परिव्राजिका**—श्रूयताम्; इयं पितरि जीवति केनापि देवयात्रा-गतेन सिद्धादेशकेन साधुना मत्समक्षं समादिष्टा—आसंवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तदेवंभाविन-मादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ।

**राजा**—युक्ता प्रतीक्षा ।

---

कायाः समवस्था संवृत्ता ॥ किं नु खलु सांप्रतं भर्ता भणति ? ॥ **प्रेष्यभावेने-त्यादि** । देवीशब्दक्षमा देवीशब्दयोग्या सतीयं मालविका प्रेष्यभावेन परिचारक-त्वेन उपयुज्यते किल । पत्रोर्णं वा धौतकौशेयमिव वेत्युपमायाम् । उपमायां विकल्पे वा'इत्यमरसिंहः । स्नानीयवस्त्रक्रियया स्नानीयवस्त्रकरणेन ॥ **भगवति ! त्वयाभिजनवतीं**

**कञ्चुकी**—देव ! कथान्तरेणान्तरितम् । अमात्यो विज्ञापयति—विदर्भगतमनुष्ठेयमनुष्ठितमभूत् । देवस्य तावदभिप्रेतं श्रोतुमिच्छामीति ।

**राजा**—मौद्गल्य ! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

**तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।**
**नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ १३ ॥**

**कञ्चुकी**— देव ! एवममात्यपरिषदे निवेदयामि ।

( राजाङ्गुल्यानुमन्यते )

( निष्क्रान्तः कञ्चुकी )

**प्रथमा**—( जनान्तिकम् ) भट्टदारिए ! दिट्ठिआ भट्टिणा भट्टदारओ अद्धरज्जे पदिट्ठं गमिस्सदि । [ भर्तृदारिके ! दिष्ट्या भर्ता भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमयिष्यते । ]

**मालविका**—एदं दाव बहु मंतव्वं, जं जीविदसंसआदो मुत्तो । [ एतत्तावद्बहु मन्तव्यम्, यज्जीवितसंशयान्मुक्तः । ]

( प्रविश्य )

**कञ्चुकी**—विजयतां देवः । देव ! अमात्यो विज्ञापयति—कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येवमेव दर्शनम् । कुतः

**द्विधा विभक्तां श्रियमुद्वहन्तौ**
**धुरं रथाश्वाविव संग्रहीतुः ।**
**तौ स्थास्यतस्ते नृपती निदेशे**
**परस्परावग्रहनिर्विकारौ ॥ १४ ॥**

**राजा**—तेन हि मन्त्रिपरिषदं ब्रूहि—सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति ।

---

मालविकामनाचक्षाणयाऽसांप्रतमयुक्तं कृतम् ? ॥ किमिव तत्कारणम् ॥ **तौ पृथगित्यादि** । तौ यज्ञसेनमाधवसेनौ पृथक्पार्थक्येनोत्तरदक्षिणे वरदाकूले । वरदा नाम तत्रत्या नदी तस्याः कूले उमे तीरे शिष्टां रक्षताम् ॥ भर्तृदारिके ! दिष्ट्या भर्ता भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमयिष्यते ॥ एतत्तावद्बहु मन्तव्यम्, यज्जीवितसंशयान्मुक्तः ॥ **द्विधा विभक्तामित्यादि** । स्पष्टोऽर्थः ॥ 'अम्हो' इति हर्षे । ततोमुख-

---

**पाठा०**—१ मवधारितमस्माभिः । २ तावदभिप्रायं. ३ नृपतेर्निदेशे. ४ परस्परोपग्रह.

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य, सप्राभृतकं लेखं गृहीत्वा पुनः प्रविष्टः ) अनुष्ठिता प्रभोराज्ञा । अयं पुनरिदानीं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः ।

( राजोत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजनायार्पयति )

( परिजनो लेखं नाट्येनोद्घाटयति । )

**देवी**—( आत्मगतम् ) अम्हो ! तदोमुहं एव्व णो हिअअं । सुणिस्सं दाव गुरुअणस्स कुसलाणंतरं वसुमित्तस्स वुत्तंतं । अदिघोरे खु पुत्तओ सेणावदिणा णिउत्तो । [ अहो ! ततोमुखमेव नो हृदयम् । श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम् । अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः । ]

**राजा**—( उपविश्य लेखं सोपचारं गृहीत्वा वाचयति ) स्वस्ति यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्येदमनुदर्शयति । विदितमस्तु । योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य संवत्सरोपावर्तनीयो निरर्गलस्तुरंगो विसृष्टः, स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनानां प्रार्थितः । तत उभयोः सेनयोर्महानासीत्संमर्दः ।

( देवी विषादं नाटयति )

**राजा**—कथमीदृशं संवृत्तम् ? । ( शेषं पुनर्वाचयति )

**ततः परान्पराजित्य वसुमित्रेण धन्विना ।**
**प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १५ ॥**

**देवी**—इमिणा आससिदं मे हिअअं । [ अनेनाश्वस्तं मे हृदयम् । ]

**राजा**—( शेषं पुनर्वाचयति ) सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति ।

**राजा**—अनुगृहीतोऽस्मि ।

---

मेव नो हृदयम् । श्रोष्यामि तावद्गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम् । अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः ॥ **यज्ञशरणादित्यादि** । अत्र राजयज्ञो नामाश्वमेधः । राजपुत्रशतपरिवृतं राजपुत्राणां शतेन परिवेष्टितम् । तथा च श्रुतावश्वमेधप्रकरणे 'शतेन राजपुत्रैः सह' इति ॥ **ततः परानित्यादि** । स्पष्टोऽर्थः ॥

**परिव्राजिका**—दिष्ट्या पुत्रविजयेन दम्पती वर्धेते ।

**भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि ।**
**वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः ॥ १६ ॥**

**धारिणी**—भोदि ! परितुट्ठम्हि जं पितरं अणुजादो मे वच्छओ । [ भगवति ! परितुष्टास्मि यत्पितरमनुजातो मे वत्सकः । ]

**राजा**—मौद्गल्य ! ननु कलभेन यूथपतेरनुकृतम् ।

**कञ्चुकी**—देव ! अयं कुमारः

**नैतावता वीरविजृम्भितेन**
**चित्तस्य नो विस्मयमादधाति ।**
**यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-**
**रग्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥**

**राजा**—मौद्गल्य ! यज्ञसेनश्यालमूरीकृत्य मोच्यन्तां सर्वे बन्धनस्थाः ।

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रान्तः )

**देवी**—जयसेणे ! गच्छ । इरावदिप्पमुहाणं अंतेउराणं पुत्तस्स[1] विअअवुत्तंतं णिवेदेहि । [ जयसेने ! गच्छ । इरावतीप्रमुखेभ्योऽन्तःपुरेभ्यः पुत्रस्य विजयवृत्तान्तं निवेदय । ]

( प्रतीहारी प्रस्थिता )

**धारिणी**—एहि दाव । [ एहि तावत् । ]

**प्रतीहारी**—( प्रतिनिवृत्य ) इअं म्हि । [ इयमस्मि । ]

**धारिणी**—( जनान्तिकम् ) जं मए असोअदोहलएणिओए मालविआए पइण्णादं, तं से अहिजणं च णिवेदिअ मह वअणेण इरावदिं अणुणेहि । तुए अहं सच्चादो ण अब्भंसिदव्वे त्ति । [ यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम्, तदस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय । त्वयाहं सत्यान्न विभ्रंशयितव्येति । ]

---

अनेनाश्वस्तं मे हृदयम् ॥ **भर्त्रासीत्यादि** । स्पष्टोऽर्थः ॥ भगवति ! परितुष्टास्मि यत्पितरमनुजातो मे वत्सकः ॥ **नैतावतेति** । स्पष्टोऽर्थः ॥ जयसेने ! गच्छ इरावतीप्रमुखेभ्योऽन्तःपुरेभ्यः पुत्रस्य वृत्तान्तं निवेदय ॥ एहि तावत् ॥ इयमस्मि ॥ यन्मयाशोकदोहदनियोगे मालविकायै प्रतिज्ञातम्, तदस्या अभिजनं च निवेद्य मम वचनेने-

---

पाठा०-१ पुत्तस्स वुत्तंतं—टीका०.

**प्रतीहारी**—जं देवी आणवेदि । ( इति निष्क्रम्य, पुनः प्रविश्य ) भट्टिणि! पुत्तविजअणिमित्तेण परितोसेण अंतेउराणं आहरणाणं मंजूसम्हि संवुत्ता । [ यद्देव्याज्ञापयति। भट्टिनि ! पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता । ]

**देवी**—किं एत्थ अच्चरिअं ? । साहारणो खु ताणं मह अ अअं अब्भुदओ । [ किमत्राश्चर्यम् ? । साधारणः खलु तासां मम चायमभ्युदयः । ]

**प्रतीहारी**—( जनान्तिकम् । ) भट्टिणि ! इरावदी उण विण्णवेदि—सरिसं देवीए पहवंतीए । तुह वअणं संकप्पिदं ण जुज्जदि अण्णहा कादुं त्ति । [ भट्टिनि ! इरावती पुनर्विज्ञापयति—सदृशं देव्याः प्रभवन्त्याः । तव वचनं संकल्पितं न युज्यतेऽन्यथाकर्तुमिति । ]

**धारिणी**—भअवदि ! तुए अणुण्णादा इच्छामि अज्जसुमदिणा पढमसंकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदुं । [ भगवति ! त्वयानुज्ञातेच्छाम्यार्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम् । ]

**परिव्राजिका**—इदानीमपि त्वमेवास्याः प्रभवसि ।

**धारिणी**—( मालविकां हस्ते गृहीत्वा ) इदं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडिच्छदु त्ति । [ इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छत्विति । ]

( राजा व्रीडां नाटयति )

**देवी**—( सस्मितम् ) किं मं अवधीरेदि अज्जउत्तो ? । [ किमवधीरयति मामार्यपुत्रः ? । ]

**विदूषकः**—भोदि ! एसो लोअववहारो—सव्वो णववरो लज्जादुरो होदि त्ति । [ भवति ! एष लोकव्यवहारः—सर्वो नववरो लज्जातुरो भवतीति ]

---

रावतीमनुनय । त्वयाहं सत्यान्न विभ्रंशयितव्येति ॥ यद्देव्याज्ञापयति । भट्टिनि ! पुत्रविजयनिमित्तेन परितोषणान्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता ॥ एतत्किमाश्चर्यम् ? । साधारणः खलु तासां मम चायमभ्युदयः ॥ भट्टिनि ! इरावती पुनर्विज्ञापयति—सदृशं देव्याः प्रभवन्त्याः । तव वचनं संकल्पितं न युज्यतेऽन्यथाकर्तुमिति ॥ भगवति ! त्वयानुमतेच्छाम्यार्यसुमतिना प्रथमसंकल्पितां मालविकामार्यपुत्राय प्रतिपादयितुम् ॥ इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छत्विति । अत्र प्रीत्युत्पादनात्प्रसादो नाम संध्यङ्गमुक्तं भवति ॥ किमवधीरयत्यार्यपुत्रः ॥ भवति ! एष लोकव्य-

( राजा विदूषकमवेक्षते )

**विदूषकः**—अहवा देवीए एव्व किदप्पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तभवं पडिग्गहीदुं इच्छदि। [अथवा देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति।]

**देवी**—एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवी-सद्दो, किं पुणरुत्तेण ?। [एतस्या राजदारिकाया अभिजनेनैव दत्तो देवी-शब्दः, किं पुनरुक्तेन ?।

**परिव्राजिका**—मा मैवम् ;

अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः।
जातरूपेण कल्याणि ! मणिः संयोगमर्हति ॥ १८ ॥

**देवी**—( स्मृत्वा ) मरिसेदु भअवदी। अब्भुदअकहाए ऊइदं ण लक्खिदं। जअसेणे ! गच्छ दाव। कोसेअपत्तोण्णजुअलं उवणेहि। [मर्षयतु भगवती। अभ्युदयकथयोचितं न लक्षितम्। जयसेने ! गच्छ तावत्। कौशेयपत्रोर्णयुगलमुपनय।]

**प्रतीहारी**—जं देवी आणवेदि। ( इति निष्क्रम्य, पत्रोर्णं गृहीत्वा पुनः प्रविश्य ) देवी ! एदं। [यद्देव्याज्ञापयति। देवि ! एतत्।]

**देवी**—( मालविकामवगुण्ठनवतीं कृत्वा ) अज्जउत्तो दाणिं इमं पडिच्छदु। [आर्यपुत्र इदानीमिमां प्रतीच्छतु।]

**राजा**—त्वच्छासनात्प्रवृत्ता एव वयम्। ( अपवार्य ) हन्त, प्रतिगृहीता।

**विदूषकः**—अहो, देवीए अणुऊलदा। [अहो, देव्या अनुकूलता।]

( देवी परिजनमवलोकयति )

**प्रतीहारी**—( मालविकामुपेत्य ) जेदु भट्टिणी। [जयतु भट्टिनी।]

( देवी परिव्राजिकां निरीक्षते )

**परिव्राजिका**—नैतच्चित्रं त्वयि;

---

वहारः-सर्वो नववरो लज्जातुरो भवतीति ॥ अथ देव्यैव कृतप्रणयविशेषां दत्तदेवी-शब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति ॥ एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः किं पुनरुक्तेन ? ॥ **अप्याकरेत्यादि**। स्पष्टोऽर्थः। अत्र लब्धार्थस्य स्थिरीकरणात्कृतिर्नाम सन्ध्यङ्गमुक्तं भवति ॥ मर्षयतु भगवती। अभ्युदयकथयोचितं न लक्षितम्। जयसेने ! गच्छ तावत्। कौशेयपत्रोर्णयुगलमुपनय ॥

**प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।**
**अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम् ॥ १९ ॥**

(प्रविश्य)

**निपुणिका**—जेदु भट्टा । इरावदी विण्णावेदि–जं उवआरातिक्कमेण तदा भट्टिणो अवरद्धा, तं सअं एव्व भत्तुणो अणुऊलं णाम मए आअरिदं । संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण सभावइदव्वेत्ति । [जयतु भर्ता । इरावती विज्ञापयति । यदुपचारातिक्रमेण तदा भर्त्रे अपराद्धा, तत्स्वयमेव भर्तुरनुकूलं नाम मयाचरितम् । सांप्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति । ]

**देवी**—णिउणिए! अवस्सं से सेविदं अज्जउत्तो जाणिस्सदि । [निपुणिके! अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति । ]

**निपुणिका**—अणुगहीदम्हि । [अनुगृहीतास्मि । ]

**परिव्राजिका**—देव! अहममुना युक्तसंबन्धेन चरितार्थं माधवसेनं सभाजयितुमिच्छामि यदि मे तव प्रसादः ।

**देवी**—भअवदीए ण जुत्तं अम्हे परिच्चइदुं । [भगवत्या न युक्तमस्मान्परित्यक्तुम् । ]

**राजा**—भगवति! मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामः ।

**परिव्राजिका**—युवयोः स्नेहात्परवानयं जनः ।

**देवी**—अज्जउत्त! किं ते भूओ वि पिअं उवहरामि? । [आर्यपुत्र! किं ते भूयोऽपि प्रियमुपहरामि? । ]

**राजा**—

**त्वं मे प्रसादसुमुखी भव देवि[1]! नित्य-**
**मेतावदेव हृदये प्रतिपालनीयम् ।**

---

यद्देव्याज्ञापयति । देवि! एतत् ॥ आर्यपुत्र इदानीमिमां प्रतीच्छतु ॥ हन्त हर्षे । प्रतिगृहीता वशीकृता । अत्र वाञ्छितावाप्तेरानन्दो नाम संध्यङ्गमुक्तं भवति ॥ अहो, देव्या अनुकूलता ॥ जयतु भट्टिनी । अत्र बहुमानप्राप्तेर्भाषेति संध्यङ्गमुक्तं भवति । **प्रतिपक्षेणेत्यादि** । स्पष्टोऽर्थः ॥ जयतु भर्ता । इरावती विज्ञापयति–यदुपचारातिक्रमेण तदा भर्त्रे अपराद्धा, तत्स्वयमेव भर्तुरनुकूलं नाम मयाचरितम् । सांप्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति ॥ निपुणिके! अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति ॥ अनुगृहीतास्मि ॥ भगवत्या न युक्तमस्मान्परित्यक्तुम् ॥ आर्यपुत्र! किं ते भूयोऽपि प्रियमुपहरामि? ॥ **त्वं मे प्रसादेत्यादि** । हे देवि! त्वं मे मम

पाठा०–१ चण्डि.

तथापीदमस्तु,–

( भरतवाक्यम् )

**आशास्यभीतिविगमप्रभृति प्रजानां**
**संपत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥**

( इति निष्क्रान्ताः सर्वे )

**इति श्रीकालिदासस्य कृतौ मालविकाग्निमित्रे पञ्चमोऽङ्कः ।**

---

नित्यं सर्वदा प्रसादसुमुखी प्रसादेन प्रसन्नतया शोभनं मुखं यस्यास्तथोक्ता भव भूयाः । एतावदेवेदमेव हृदये मनसि प्रतिपालनीयमपेक्षणीयम् । इतःपरं भरतवाक्यम् । **आशास्यमित्यादि** । प्रजानां जनानामभ्यधिगमात्संप्राप्तेः परिग्रहादित्यर्थः । तस्मात्प्रभृत्यारभ्याग्निमित्रेऽस्मिन्नायके गोप्तरि रक्षके सति तासां प्रजानामाशास्यमपेक्ष्यवस्तु न संपद्यत इति न न संभवतीति न, संभवत्येवेत्यर्थः । अनेन आशास्यसिद्धिकथनरूपेण शुभशंसनात्प्रशस्तिर्नाम संध्यङ्गमुक्तं भवति । यदुक्तं— 'प्रशस्तिः शुभशंसनम्' इति । सर्वनाटकप्रयोगान्ते भरतेन सर्वकालसाधारणे आशीर्वचने कर्तव्ये सति अत्र प्रजानामाशास्यसिद्धिं प्रति गोप्तुरग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्यम् ॥ **इति श्रीकाटयवेमभूपविरचिते कुमारगिरिराजीये मालविकाग्निमित्रव्याख्याने पञ्चमोऽङ्कः ।**

श्रीमत्काटयवेमस्य कृतिर्विज्ञानशालिनः ।
कुमारगिरिराजीया जीयादाचन्द्रतारकम् ॥

# मालविकाग्निमित्रपद्यानुक्रमकोशः

# कतिपयोपयोगिग्रन्थाः

पञ्चतन्त्रम्—विष्णुशर्मसंकलितम्, सरलाख्यसुगमटीकया विषय-कथाकोश-पद्यानुक्रमकोशादिभिः प्रो. डी. डी. कोसंबीमहाशयानां मार्मिकप्रास्ताविकेन च सनाथीकृतम्। शिशूनौषधग्रहणे गुडजिह्विका यथा प्रवर्तयति तथैव ग्रन्थोऽयं नीति-व्यवहार-चातुर्य-कर्तव्याद्युद्बोधक-मनोहारिकथानकैः सुरभारतीज्ञानं सुकुमारमतीनप्यन्तेवासिनोऽल्पेनैव समयेन ग्राहयति व्यवहारशास्त्रनिपुणांश्चैकसमयावच्छेदेन विदधातीत्यस्य प्रसिद्धिः। मूल्यम् रू. ४

अभिज्ञानशाकुन्तलम्—कालिदासकृतं, सर्वाङ्गसुन्दरमभिनवं संस्करणं राघवभट्टकृतयार्थद्योतनिकाटीकया, परिशिष्टपाठान्तरानेक-सूच्यादिभिश्चालङ्कृतम्। मूल्यम् रू. ३–८

स्वप्नवासवदत्तम्—महाकविभासप्रणीतं, पं. पुरुषोत्तमशास्त्रीदत्त-वाडकरविरचितव्याख्ययालङ्कृतं कालिकाता-वाराणसी-संस्कृतपरीक्षा-र्थिनां तथा आंग्लमहाविद्यालये विशेषेण संस्कृताध्येतॄणां कृतेऽतीवोपयु-क्तमिदम्। व्याख्या चैतस्यातीव सरला विस्तृता च। ध्वन्यलङ्कारवस्तु-रसादीनां च विवेचनं तथा प्रत्यङ्कारम्भे तस्य तस्याङ्कस्य विषयः स्थल-कालयोर्निर्णयश्च नावीन्यं प्रकटीकरोति। मूल्यम् रू. ३

अलङ्कारसर्वस्वम्—राजानकरुय्यककृतं, जयरथकृतटीकासहितम्। अस्मिन् शब्दार्थोभयविधालङ्काराणां मनोहरतया विवेचनं विद्यते, अत एवायं ग्रन्थः केवलं ( रसादिज्ञानं विना ) अलङ्कारजिज्ञासूनामतीवोप-योगीति प्रसिद्धिः सर्वत्र। मूल्यम् रू. २

अभिधावृत्तिमातृका—महामहोपाध्याय-श्रीमन्मुकुलभट्ट-प्रणीता। मूल्यम् १२ आणकाः

अलंकारकौस्तुभः—पं. श्रीविश्वेश्वरविरचितः। मूल्यम् रू. ४

उज्ज्वलनीलमणिः—श्रीमद्रूपगोस्वामिप्रणीतः, श्रीमद्विश्वनाथविर-चितव्याख्या, श्रीजीवगोस्वामिविरचितव्याख्या इति टीकाद्वययुतः। मूल्यम् रू. ४